# गीताञ्जलिः

रवीन्द्रनाथ-कृत 'गीताञ्जलि'काव्यस्य
संस्कृतानुवादः

महामहोपाध्याय श्रीकालीपदतर्काचार्य-कृतः

विश्वभारती ग्रन्थनविभाग
कलिकाता

# भूमिका

महामहोपाध्यायपदलाञ्छनस्य श्रीकालीपदतर्काचार्यस्य कवित्वशक्तिः सहृदयगोष्ठीषु सुविदिता। अनेन विपश्चिदग्रेसरेण बहवः संस्कृतकाव्यग्रन्था विरचिता ये नाम विबुधचेतांसि सुतरामावर्जयन्ति। अन्यच्च परममिदमानन्दस्थानं यत् स कविसार्वभौमस्य रवीन्द्रनाथस्य वङ्गभाषामयानामनेकेषां पद्यानां संस्कृतभाषयानुवादे सन्नद्धो भवति। साम्प्रतं तेन रवीन्द्रनाथनिर्मितस्य गीताञ्जलिरिति पद्यात्मकस्य ग्रन्थविशेषस्यानुवादो विहितः। स खलु गीताञ्जलिनामको ग्रन्थो यदाङ्गलभाषयानूदितो बभूव तदा प्रभृत्येव कविसार्वभौमस्य प्रतिभा दिक्षु विदिक्षु च प्रसरन्ती समग्रे जगतीतले तस्य कविवर्यस्य किमपि विलक्षणं गौरवं समानीतवती। तादृशस्य ग्रन्थरत्नस्य संस्कृतभाषयानुवादेन तर्काचार्यमहोदयेन गीर्वाणवाणीपरिशीलनपराणां समेषामेव विदुषां महान् कश्चनोपकारोऽनुष्ठितः। अनुवादग्रन्थस्याप्यस्य विशेषस्तावदयमेव यदत्र कविसार्वभौमस्य नैपुण्यं सर्वथा सहृदयानामतिरोहितं चकास्ति।

श्रीगौरीनाथशास्त्रिणः

वाराणसेयसंस्कृतविश्वविद्यालयकुलपतेः

## अनुवादकस्य निवेदनम्

पूर्ववंग-प्रदेशीय-कोटालिपारवासिनः ।
तर्कतीर्थोपनाम—श्रीहरिदासमनीषिणः ।
सुतेन तर्काचार्येण काश्यपान्वयजन्मना ।
बाल्यावधि प्रयत्नेन देववाणीनिषेविणा ।
कवीन्द्रश्रीरवीन्द्रस्य गीताञ्जलिरनुत्तमः ।
अनूदितो देववाण्या श्रीकालीपदशर्मणा ।
श्रीविश्वभारती-ग्रन्थप्रकाशनविभागतः ।
देववाणीमयो गीताञ्जलिः सोऽयं प्रकाशितः ।
अनुवादक एषोऽहं प्रीतिपूर्णेन चेतसा ।
श्रीविश्वभारतीं भूयो वेदयामि कृतज्ञताम् ।

गीताञ्जलिर्जयति विश्वकविप्रणीतो
येनाप विश्वबुधसंसदि सोऽतिमानम् ।
तस्यानुवादकरणार्थमयं प्रवृत्तो
हास्यो न किं शिशुरिवेन्दुपरिग्रहार्थी ॥
तथापि तत्काव्यरसं कथञ्चिद्
वङ्गीयभाषामविदत्सु दित्सुः ।
यथावबोधं विदधेऽनुवादं
वैश्वेन वृन्दारकवाङ्मयेन ॥
यस्मिन् रवीन्द्रपरिकल्पितभावधारा
न व्यक्तिमाप समगादथवान्यथात्वम् ।
संशोध्य तत्तदखिलं कृपयात्र दीने
निर्दोषतां नयत भो रविकाव्यदक्षाः !

हुगलीमण्डलान्तर्गतभद्रकालीपत्तनस्थ-
शान्तिनगरग्रामवर्त्तिकाश्यपाश्रमतः ।

बिबुधविधेय
श्रीकालीपदतर्काचार्यस्य

## गीताञ्जलेः संस्कृतानुवादकस्य

## मङ्गलाचरणम्

काव्यानि गीतानि च नन्दनानि
यस्यांशभूतानि महाविभूतेः ।
शब्दात्मने तामसभास्कराय
नमोऽस्तु तस्मै परमेश्वराय ।

स्वल्पेनाप्युपचारकेण भगवान् भक्तेन सम्पूजित-
स्तस्मै सम्प्रददाति वाञ्छितफलं नैकत्र दृष्टं तथा ।
विश्वस्तो नतिमात्रमप्यनुगतः संकल्पसिद्धौ ततः
श्रीगीताञ्जलिसंस्कृतानुवचने जातः प्रवृत्तोऽस्म्यहम् ।

अस्योत्कर्षेऽपकर्षे वा प्रमाणं सुविपश्चितः ।
सौवर्णिकं विना को वा सुवर्णं सुपरीक्षताम् ।

१

'आमार माथा नत क'रे दाओ हे तोमार,

चरणधूलार तले'

मम,—शीर्षं नय नतिर्मयि ! तव

चरणरेणुतले ।

सकलमहंकारं मम

मज्जयाश्रुजले ।

साधयितुं स्वगौरवम्,

सदा दधे स्वपरिभवम्,

वृथा,--केवलमावेष्ट्य निजं

भ्रमामि प्रतिपले ।

सकलमहङ्कारं मम
मज्जयाश्रुजले ।

प्रचार्य्यतां न निजगुणो
मयका निजकर्मणे ;
पूर्णं कुरु निजबाञ्छित—
मयि ! तव मम जीवने ।

चरमशान्तिरर्थ्या तव,
परमकान्तिरन्तस्तव,

तिष्ठ व्यवधाय मां हि हृदयपद्मदले ।
सकलमहंकारं मम मज्जयाश्रुजले ।

'आमि बहु बासनाय प्राणपणे चाइ
बञ्चित क'रे बाँचा'ले मोरे,'

अहम्, प्राणपणं प्रार्थयामि बहुलहृदयवाञ्छितम्,
मम विधाय वंचनमयि ! जीवनं त्वयावितम्।
मम कठोरमिदं कृपाबलं जीवनसंचितम्।
तनुगगनालोकमनांसि जीवनम्,
वितीर्णवान् यानि भवान् विनार्थनम्,
दिने दिने तदसमदानपात्रताम्
भवान् मम प्रणयति मित्रतोचितम्।
महैषणाभयात् सुरक्ष्य मामृतम्।

विस्मरामि कदाप्यहं कदाप्यहं चलामि वा,
तव पदवीं समनुसरन्;
निष्करुणस्त्वमपसरसि सम्मुखतः
इयं हन्त ! तव करुणैव बुध्यते,
निवर्त्तकस्त्वमसि निनीषसे यतः।
तव मिलनस्यैव भवान् योग्यतमं प्रसाधयन्,
आधास्यति पूर्णं मम जीवनमिदमाग्रहतः,
अर्द्धकामविपन्मुखादिमं जनं प्रपालयन्।

'कत अजानारे जानाइले तुमि, कत घरे दिले ठाँइ'

कियदज्ञातं ज्ञापितवांस्त्वम्,
कियति च निलये व्यतरः स्थानम्।
दूरं व्यदधा निकटं बन्धुं
भ्रातरमकृथाः परमपि च त्वम्।

हित्वा यावत् सद्म पुराणम्,
क्वचन करोम्येष प्रस्थानम्।
किं भवितेति व्याकुलमनसा
करोमि बहुलं ध्यानम्।
नूतनमध्ये त्वमसि पुराण—
स्तद् विस्मरामि तत्त्वम्
दूरं व्यदधा निकटं बन्धुं,
भ्रातरमकृथाः परमपि च त्वम्।

जीवनमरणे निखिले भुवने,
यत्र त्वमसौ नेष्यसि यावत्,
प्रतिभवपरिचित ! सर्वं तस्मिन्
ज्ञापयितासे त्वमेव तावत्।

त्वयि विज्ञाते न परः कश्चित्,
क्वापि न बाधा न च भीतत्वम्,
सम्मेल्याखिलमसि जागरितो
भवतु मम त्वत्प्राप्तिर्नित्यम्।
दूरं व्यदधा निकटं बन्धुं,
भ्रातरमकृथाः परमपि च त्वम्।

४

४

'बिपदे मोरे रक्षा करो ए नहे मोर प्रार्थना'

विपदि मां रक्ष मम नैवमभियाचितम्,
न विपदो भवतु मम भीतिः
दुःखसन्तप्तहृदि दिश न वा सान्त्वनां,
भवतु मम दुःखजयशक्तिः।
यदि मम सहायको नो मिलेद् भाग्यतः
मास्तु मे निजबलमपास्तम्।
क्षतिरिह भवेद् यदि च्छलनमपि केवलम्
मास्तु हृत् क्षयमननदुःस्थम्॥

मां परित्रास्यसे त्वमिति मम नार्थना
मम तरितुमस्तु निजशक्तिः
इह किल विधाय मे भारभरलाघवं
मास्तु वा सामवचनोक्तिः।
भारमभिवोढुमिह भवतु बलयुक्तिः।
समवनतमस्तकं सुखविभववासरे
तव हि मुखपरिचयं यायाम्।
दुःखनिशि वंचयेदखिलवसुधा यदा
त्वयि न किल संशयी भायाम्।

## ५

'अन्तर मम बिकसित करो अन्तरतर हे'

अन्तर्मम कुरु विकसितमन्तरतर हे !
कुरु निर्मलमुज्ज्वलरुचि सुन्दरमपि हे !
उद्यतमथ जाग्रत् कुरु निर्भयमपि हे !
कुरु मंगलमनलसमपसंशयमपि हे !
अन्तर्मम कुरु विकसितमन्तरतर हे !
संयोजय निखिलैः सह विगतं कुरु बन्धम्,
संचारय सकलविधिषु शान्तं त्वच्छन्दम् !
पदकमले मम मानसमचलं कुरु हे !
नन्दय खलु नन्दय खलु नन्दय खलु हे !
अन्तर्मम कुरु विकसितमन्तरतर हे !

'प्रेमे प्राणे गाने गन्धे आलोके पुलके'

प्रेम्नि तथान्तर्गाने गन्धे पुलके चाप्यालोके,
कृत्वा प्लावनमखिले स्वेन त्रिदिवेऽपि च भूलोके
निर्मलममृतं भवतः पतति क्षरितम्।
अद्य प्रतिदिशमखिलनियन्त्रणविगमात्
मूर्त्ति धृत्वा स्फूर्त्तिमगादानन्दः
समजनि जीवितमतिगहनामृतनिचितम्।

शुभरससरसि स्फुटितं मम चैतन्यम्,
शतदलकमलवदमितमुदा सम्भिन्नम्,
सकलं निजमधु सित्त्वा तावकचरणे,
आलोके नीरावे जागरितान्तः प्रान्ते,
उदारदिनमुखसमुदयलोहितकान्तिः,
आवरणं हृतमलसे मामकनयने।

७

'तुमि नब नब रूपे एसो प्राणे'

नवनवरूपेण त्वमुपैहि प्राणे
एहि गन्धे वर्णे गाने।
समेहि पुलकमयस्पर्शमङ्गचये
एह्यमृतमयहर्षमन्तरनिलये।
एहि मुग्धनिमीलितनेत्रयुगस्थाने
नवनवरूपेण त्वमुपैहि प्राणे।

एहि प्रोज्ज्वल निमल कान्त!
एहि स्निग्ध सुरम्य सुशान्त!
एहि समेहि विचित्रविधाने।
एहि सुखे दुःखेऽपि च मर्मणि
एहि प्रतिदिनमखिले कर्मणि
एहि च सकलविधेरवसाने
नवनवरूपैरेहि प्राणे।

८

'आज धानेर क्षेते रौद्रछायाय लुकोचुरिर खेला'

अद्य,—धान्यक्षेत्रे छायातपे लुप्तचौरखेला
सुनीलगगनतले केन संघटिता
धवलजलदप्लवसंप्लवनलीला ?
अद्य,—मधुपानं विस्मरति मधुकरश्रेणी
उत्पतन्ती विहरति प्रभयोन्मादिनी।
अद्य किल तरङ्गिणीसङ्गतसैकते
कस्य कृते चक्रवाकमिथुनसुमेला ?

अयि भ्रातः! प्रयास्यामि नाद्य गृहं प्रति
प्रयास्यामि नाद्य गृहं प्रति।
अखिलं हि वाह्यवस्तु भित्त्वाकाशमये!
लुण्ठनेन वरिष्ये सम्प्रति।
जलोच्छ्वासजलगता फेनमाला यथा
समीरणे तथा हास्यमद्य प्रसर्पति।
अद्य,—उद्देश्यवर्जितवंशीवादनकर्मणा
सर्वा व्यपगमिष्यति प्राभातिकवेला।

९

'आनन्देरइ सागर थेके एसेछे आज बान'

अद्यानन्दमयार्णवाद् वन्या समागता
धृत्वारित्रमद्य सर्वे भ्रातरः स्थ स्थिताः।
यूयमाकर्षत समाकर्षत संहताः।
यावद् भारैः पूरयिष्ये, दुःखतरीं तारयिष्ये,
पारोद्देशं गमयिष्ये, तरङ्गेण पथा।
प्रगच्छन्ति यदि प्राणाः प्रगच्छन्तु मम
अद्यानन्दार्णवादेव वन्यासमागमः।

को नन्वामन्त्रयति रे पृष्ठप्रदेशतः
प्रतिषेधवाचमपि को ननु वदति ?
सर्व एव भयागमस्तिष्ठति विदितः
को नु भयकथामद्य विनिवेदयति ?

केनाभिशापेन केन ग्रहदोषेण वा
सुखमयस्थलभुवि भवेयमासितः।
दृढं ग्रहीष्यामि वातपटदाम किल
सङ्गीतकपदमपि गास्याम्यविरतः
अद्यानन्दार्णवादेव प्रोच्छ्वास आगतः।

१०

'तोमार सोनार थालाय साजाब आज दुखेर अश्रुधार'

त्वदीयसुवर्णमयभाजनफलके
अद्य दुःखबाष्पधारा सुसज्जयिष्यते ।
तव कण्ठविभूषणमौक्तिकमालिका
जननि हे ! मया किल विरचयिष्यते ।
पदान्तिके रविस्तथा सितकिरणः
स्रगवदस्ति मातः ! कृत-सुवेष्टनः
तव वक्षसि मम दुःखाभरणं शोभिष्यते ।
धनधान्ये स्वं तवैव वद किं ननु विधास्यसे ?

यदि दित्ससि दद्या मे गृहाण यदि जिघृक्षसि ।
दुःखं मे निजं वस्तु, विदितस्तव शुद्धमणिः ।
गर्ब एष मम, त्वया प्रसादेन स क्रीयते ।

११

आमरा बेँधेछि काशेर गुच्छ आमरा गेँथेछि शेफालि-माला'

रचितः काशस्तवकोऽस्माभिः

शेफालीस्रग् ग्रथिता

नवधान्यावलिमञ्जरिकाभि—

श्चयनी प्रचितानीता।

धवलपयोधररथमारूढा

शारदलक्ष्मीरेहि

निर्मलनीलपथेन समेहि।

धौतश्यामल आलोकोज्ज्वल-

वनगिरिपर्वत एहि।

मुकुटारोपितहिमशिशिराप्लुत-

सुधवलशतदलमेहि।

विस्तारित-निपतित-मालतिका-

पुष्पमयासनमाले

निभृते कुञ्जे जलपरिपूरित-

निर्जरतटिनी-कूले

पक्षतियुगलनिपातनकौतुक-

मुपजनयितुमुपसलिले

विहरति ललिता हंसकमाला

नियतं तव पदमूले।

तव सुवर्णवीणागुण आदरावहे

मृदुल-मधुर-झङ्कृतिमयतानं तनु हे।

स्वरो हास्यसमाप्लुतो द्रुतो भविष्यति स्रुतः

१२

क्षणिकाश्रुक्रमेण हे ।

सान्तरालमलकतटे यः स्फुरति स्पर्शमणिः

सकृपकरं मनसि पलं मर्शय तं मर्शय हे,

भावना निखिला द्रुतं स्वर्णभावमेष्यति हे,

आलोकस्वरूपतां तिमिरततिर्यास्यति हे ।

## १२

'लेगेछे अमल धवल पाले मन्द मधुर हाओया'

अमलधवलतरणिपटं मन्दमधुरवात इतः।
एवं तरिवाहनविधिरिह कदापि न लक्षितः।
कस्य सागरस्य तटात् कस्य सुदूरस्य धनम्
उपोह्यते, येन मनो विधित्सति प्रोत्प्लवनम्।
वस्तु यद् यदभीप्सितं, यद् यदभूदुपार्जितम्,
जहतस्तत् सर्वमिह क्वचन हि गन्तुमेषणम्।
स्रवति पृष्ठतो झर्झरायितं
गुरुगुरुस्वनैरन्वितं जलम्।
खण्डिताम्बुदस्यावकाशत-
स्तपनरश्मिरेत्यायते मुखम्।

कर्णधार! कस्त्वं, वसु कस्य हसितविलापया-
रिति विचिन्त्य निरतिशयं ताम्यति मेऽन्तःकरणम्।
स्वरेण केन साम्प्रतं योजयितासि यन्त्रकं
कस्य मन्त्रपदस्यापि सम्भविता गानमित?

## १३

'आमार नयन-भुलानो एले'

हे मम लोचनयुगलाकर्षण ! भवता किल किं समुपगतम् ?
किमहमदर्शं प्रविधाय परं मामकचित्तं सम्प्रसृतम् ।
शेफालीतलपार्श्वशये
विशीर्णनिपतितपुष्पचये
प्रतिशष्पे हिमसेकमये
कृत्वारुणसमसुरक्तचरणनिपातं
हे मम लोचनयुगलाकर्षण ! भवता किल किं समुपगतम् ?
छायालोकाञ्चलकं लुण्ठति किल वने वने
पुष्पकुलं तदभिमुखं वक्ति किमन्तःकरणे ।
कर्त्तास्मिस्तव वरणं
मुखावृतेः कुरु हरणं
घनावरणमल्पमदः करयुगेन कुरु विगतं
हे मम लोचनरञ्जन ! भवता किल किं समुपगतम् ?
द्वारे द्वारे काननदेव्याः
शृणोमि मांसलशङ्खध्वनितं
गगनविपञ्चयास्तन्त्र्यां तन्त्र्यां
प्रसरति तावकसङ्गतिगीतम्
क्व रणति तव काञ्चनमञ्जीरं
मन्ये ह्यधिमन्मानसतीरम् ।
प्रतिविधिभावं कृत्वा कलितं
प्रस्तरपीड़ं स्रावितममृतं
हे मम लोचनरञ्जन ! भवता करुणां श्रयता समुपगतम् ।

## १४

'जननी, तोमार करुणचरणखानि हेरिनु आजि ए अरुणकिरण-रूपे'

हे मातस्तव करुणं चरणं

दृष्टमद्य रविरश्मितया,

मृतिहर-वाणी नीरवगगनं

सम्पूरयति रहस्यतया।

प्रणमामि त्वां सकले भुवने

तथैव सकले जीवनकरणे

तनु-धन-हृदया-न्यद्य प्रददे

भक्तिसुपावन! धूपतया।

हे मातस्तव करुणं चरणं

दृष्टमद्य रविरश्मितया।

## १५

'जगत् जुड़े उदार सुरे आनन्द गान बाजे'

उदारेण हि स्वरेण परिव्याप्य चराचरं
प्रमोदसङ्गीतमहो ! प्रध्वनति प्रसृत्वरम् ।
तत् कदा गभीररवं चित्ते मम रणिष्यति ?
समीरणालोकपयोनभःसु सर्वेषु समं
कदा ममान्तःकरणं प्रेममयं भविष्यति ?
स्थितिं करिष्यन्ति तथा हृदयसभां व्याप्य कदा
तानि भृशं मण्डितानि विविधवेशसुसम्पदा ?
कदा भवेत् सुखि हृदयं नयनयुगोन्मीलनया
पथिषु तथा चलिष्यामि सर्वनृणां तोषणया ।
'त्वं किलासि' तत्त्वमिदं स्वतः कदान्तराप्स्यति ?
स्वयं सर्वविधिषु नाम तव रणितं भविष्यति ?

## १६

'मेघेर परे मेघ ज'मेछे, आँधार क'रे आसे'

मेघात् परतो निचितो मेघ-
स्तिमिरं व्याप्तुं प्रक्रमते
केन भवान् मां निकषा द्वारं
सहचररहितं वासयते ?
कार्य्यावसरे विविधविधाने
निरतो वर्त्ते लोकविताने
अद्य किलाहं स्थित उपविष्ट-
श्चेतस्याशां कृत्वा प्रिय ! ते।
केन भवान् मां निकषा द्वारं
सहचररहितं वासयते ?
यदि नहि देयः साक्षात्कारः
कार्य्या वा मयि हेला
कथमतिगच्छेत्तर्हि ममेदृश-
दुःसहवार्षिकवेला ?
नेत्रोन्मीलं दूरपदं प्रति
रचयन्नासे केवलमीक्षां
दुरन्तमारुतमनु च मनो मम
विहरत्यापत्वा रोदनदीक्षाम्।
कथमसहायं द्वारं निकषा
वर्त्तयसे मम वर्त्तनशिक्षाम्।

## १७

'कोथाय आलो, कोथाय ओरे आलो'

अरे,—आलोकः क्व नु ? आलोकः क्व नु ?
विरहहुताशनशिखया कामं सन्दीपय सन्दीपय तं ननु।
तिष्ठति दीपो नास्ति ज्वाला
भाले किमिदं लिखितमभून्मे ?
अस्माद् भावाच्छ्रेयो मरणं,
दीपं तनु विरहानलकरणम्।
वेदनादूतिका साधयति गानं,
चित्त रे,—वहति भगवानसौ तुभ्यमवधानम्।
निविडतरतिमिरधरनिर्ज्जननिशीथे,
त्वामयमुपाह्वयति कत्तुमभियानं
दुःखमुपपाद्य तव पालयति मानं,
वहति भगवानसौ तुभ्यमवधानम्।
गगनतलमजनि घनपूर्ण
पतति किल वृष्टिजलमनिशमवशीर्णम्।
इह किमभि घोरनिशि
सपदि मम मानसं
जागरितमित्थमतिमात्रम्
कथमसमयातनादीर्णम् ?
पतति किल वृष्टिजलमनिशमवशीर्णम्।
चञ्चलया क्षणिकविभा केवलमर्प्यते
निविडतरं तिमिरमहो चक्षुषि सूयते।
नावधारयामि खलु क्व वा भृशान्तरे

गीतपदं रणनमगादतिगभीरमरे !
निःशेषं पथि हृदयं तेन हि कृष्यते,
निविडतरं तिमिरमहो चक्षुषि सूयते ।
आलोकः क्व नु आलोकः क्व नु ?
विरहमयहुतभुजा ज्वालय तं ज्वालय ननु ।
ह्वयति पयोदो ह्वयति च वातः
समये वीते न भवेत् पातः ।
निकषवदसिता निविडा हि निशा
प्रेमज-दीपं ज्वालय साग्रह-मनसा ।

'आजि श्राबणघन-गहन-मोहे गोपन तब चरण फेले'

अद्य श्रावणघनघनमोहाद् गुप्तसमर्पितचरणः
रजनीवत् त्वं रवपरिवर्ज सर्वदृशो वहिरापागमन ।
अद्य विभातं मुद्रितनेत्रं
वातो विफलाहूतेः पात्रं
आवृत्यासितनिस्त्रपगगनं
विस्तृतवान् को जलदं गहनम् ।
कूजनहीना काननधरणी
द्वारं सवृतमखिले गेहे
एकः कस्त्वं पथिक ! स्थाता
पथिकविहीने खलु पथिदेहे ।
एक प्रियतम हे मम बन्धो !
अनपावृतमिदमस्ति गृहं मे
स्वप्नवदभिमुखसरणिं श्रित्वा
मा मां घृणयातीत्य व्रज हे ।

## १९

'आषाढ़–सन्ध्या घनिये एल गेल रे दिन बये'

आषाढसन्ध्या समुपैति सन्निधि
प्रायेण यातो लयमेष वासरः ।
वृष्ट्यम्बुधारा परिमुक्तबन्धना
क्षरत्यहो सान्तरमन्तरान्तरा ।

आसीन एकोऽस्मि गृहैकदेशे
स्वेनात्मना किञ्चन चिन्तयामि ।
यूथीवने नीरनिषिक्तवातः
सरत्यहो कां नु कथां विवृण्वन् ।
वृष्ट्यम्बुधारा परिमुक्तबन्धना
क्षरत्यहो सान्तरमन्तरान्तरा ।
सञ्चारितो वीचिचयोऽद्य मानसे
नान्विष्य कूलं मयकाधिगम्यते ।
घनाम्बुसंसिक्तवनप्रसूनकं
स्वसौरभैः क्रन्दयतीव मानसम् ।
तमस्विनीयामचयं समुद्गतं
केन स्वरेणाद्य करोमि पूरितम् ।
कुतो नु मोहात् सकलं हि विस्मरन्
अद्याकुलान्तःकरणो वसाम्यहम् ।
घनाम्बुधारा परिमुक्तबन्धना
क्षरत्यहो सान्तरमन्तरान्तरा ।

## २०

आजि झड़ेर राते तोमार अभिसार, परानसखा बन्धु हे आमार'

अद्य,—वात्यामयनिशि भवदभिसारः
प्राणप्रियतम ! मम सखिसार !
निहताशमिव क्रन्दति गगनं
न भजति निद्रां मामकनयनम् ।
प्रियतम ! पररमुन्मोच्य द्वारं
पर्य्यालोके वारं वारम् ।
प्राणप्रियतम ! मम सखिसार !
न वहिरभिवीक्ष्यते किञ्चिदपि संस्थितं
क्व तव सृतिरिति मनसि भवति मम भावितम् ।
दूरतटिनीतटे क्व घनवनपार्श्वतः
क्वाथवा गहनतमतिमिरे
परमसख ! मित्र मम पतसि पथिपारे ।

२१

'जानि जानि कोन् आदिकाल ह'ते'

वेद्मि वेद्मि कुतो ह्यादिकालान्ननु मां व्यधाः
जीवनकस्रोतसि हे संप्लवनव्याप्तम्।
सहसा प्रिय! कियति गृहे कियति च पथि हर्षणं
मदीयमानसे कियत्त्र्यस्य गतः प्रोत्थितम्।

कतिकृत्वस्त्वं घनान्तराले
स्थित इत्थं यन् सुमधुरहासं
चरणं न्यदधास्त्वमरुणकिरणे
भाले प्रादाः शुभसंस्पर्शम्।
आस्ते चितमिह मामकनयने
कतिरूपेक्षणमरूपशरणे
कियति हि काले कियति हि लोके
कियति च नवनवललितालोके।
कतियुगकालं वेत्ति न कश्चित्
कियति प्रेमसुखासुखगाने
अमृतस्य कियद्रसवर्षणकं
समुदितमभवन्मानसपूरम्।

## २२

'तुमि केमन क'रे गान कर हे गुणी'

त्वं नु गीतकलानिधे ! कथं गायसि हे कलं
सुविस्मितः शृणोम्यहं शृणोम्यहं हि केवलम् ।
स्वरप्रभा जगत् समश्नुते
स्वरानिलो वहति नभःपथे
प्रस्तरकं त्रुट्यति हि द्रुतं विषमवेगबलम्
वहतितरां स्वरसुरनिम्नगा चलम् ।
प्रगातुमिच्छामि तथा स्वररहं
कण्ठे नान्विष्य लभे मम स्वरम् ।
विवक्षामि किन्तु, कथा कथोद्यमे प्रबाधिता
पराजितं हृन्मम हा विरोदिति,
मां न्यदधाः किंविधकूटयन्त्रके
मां परितो वयन् स्वरानायकुलम् ।

२३

'अमन आड़ाल दिये लुकिये गेले चलवे ना'

तथान्तरालवर्त्मना गुप्तगतिर्न योक्ष्यते ।

वसान्तरे गुप्ततया हि सम्प्रति ।

न कश्चन ज्ञास्यति हे न कोऽपि वा वदिष्यति,

विश्वे तव लुप्ततस्करिका,

देशविदेशयोरस्ति कियती मम विहारिका,

सम्प्रति वद—मामकीन-हृदयकोणपदे,

गमिष्यसि प्रकाशतां न च्छलयिष्यसि,

तवान्तरालवर्त्मना गुप्तगतिर्न योक्ष्यते ।

जाने मम हृत् कठिनं,

न योग्यमिह पदार्पणम्,

बन्धो ! तव समीरणस्पर्शादपि नो भविता

किन्नु तत्र कठिनमनसि योग्यद्रवसङ्कुलता ?

स्यान्ममास्ति न साधना

यदि स्यात्ता कृपाकणा

तदा क्षणेन पुष्पकं

न किं विकाशमेष्यति ?

क्षणेन वा न किं फलं

समुद्गतं भविष्यति ?

तवान्तरालवर्त्मना न योक्ष्यते गुप्तगतिः ।

## २४

'यदि तोमार देखा ना पाइ प्रभु'

प्रभो ! जीवनेऽस्मिन् न यद्यत्र वारे,
भवत्पुण्यसाक्षात्कृति भो लभेय,
न लब्धस्त्वमेवं स्मृतिर्मे तदास्ताम्,
न तद्विस्मृतिः स्यात् सदा स्याञ्च खिन्नः ।

भवे हट्टकल्पे क्षयं सम्प्रयान्तु
मदीयानि यावन्ति तावद् दिनानि
द्विहस्ती च यावद्धनेनास्तु पूर्णा
तथाप्यस्तु चित्ते किमप्यापि नेति ।
न तद्विस्मृतिर्मे कदाचित् समास्तां
मनोवेदना मे सदैवास्तु तस्मात् ।

यद्यालस्यभरेण मध्यसरणावासादयाम्यासनं
धूलौ वा शयनं तथा विरचयाम्यासाद्य यत्नं बहुम् ।
चेतस्यस्तु तदा समस्तसरणिः शिष्टेति तत्त्वं ध्रुवं
नो तद् विस्मृतमस्तु सर्वसमये तेनास्तु मे वेदना ।

यावदेव हसितं प्रवर्त्ततां
यावदस्तु मुरलीरुतं गृहे ।
यावदस्तु भवनं प्रसाधितं
तावतापि न गृहं त्वमापितः ।
एतदस्तु चिरमेव मानसे
नो कदापि तदिहास्तु विस्मृतं
तत्कृता सततमेव वेदना
मामके मनसि सम्प्रवर्त्तताम् । ( युग्मकम् )

## २५

'हेरि अहरह तोमारि बिरह'

वीक्षेऽहरहस्त्वदीयविरहो
भुवने भुवने राजति हे।
धृतबहुरूपं विपिने शैले,
जलधौ नभसि च दीव्यति हे।
निखिलां रात्रिं प्रतिनक्षत्रं
सुस्थिरनेत्रं नीरवमुषितः
श्रावणधारा-पल्लवदलतः
प्रचरति विरहस्तव भुवि हे
अद्य प्रतिगृहममितव्यथिते,
तव सुगभीरो विरह उपैति,
कियति प्रणये कियति च कामे,
कियति दुःखसुखकर्मणि हे।
जीवनमखिलं नीत्वौदास्यं
गीतस्वरशततरलितगलितः
विरहस्तव खलु भजते पूर्त्तिं
मामक-मानससद्मनि हे।

'आर नाइ रे बेला नामल छाया धरणीते'

नातः परमवशिष्टा वेला ।
वसुन्धरायामवतीर्णाभूत् सान्ध्यच्छायालीला ।
सम्प्रति घट्टं प्रति ननु चल रे
सलिलैः कलसं पूरयितुम् ;
जलधारायाः कलनिस्वननं
पर्य्याकुलयति सान्ध्यं गगनं
ह्वयति हि मां पथि तदिदं ध्वननं
कलसं किल परिपूरयितुम्
घट्टं प्रति ननु चल रे ।
जनरहिते पथि गमनागमने
कोऽपि न सम्प्रति कुरुते,
अरे,—प्रेमतटिन्यामुदगाल्लहरी
तरलो वायुर्गगनपथे ।
प्रत्यावृत्तो भवितास्मि न वा
तत्तत्त्वं नहि जाने
केन समं मम परिचयभाग्यं
भविता योग्यं निजफलदाने
घट्टे सोऽविज्ञातस्तर्य्यां
वीणायन्त्रं रणयति रे
कलसं किल परिपूरयितुं
घट्टाभिमुखं सञ्चल रे ।

'आज बारि झरे झरझर भरा बादरे'

अद्य प्रपतति झर्झरधारं

सलिलं पूर्णं जलदायाने ।

गगनविदारि स्रुतविश्रान्ता

धारा क्वापि न माति स्थाने ।

शालवने सान्तरगतिवात्या

सस्वन—दोलनमातनुते

क्षेत्रस्योरसि सलिलश्रेणी

कुटिलस्यन्दं रयमयते ।

जलदजटावलिमुत्पात्याद्य,

प्रसभं नृत्यं कः कुरुते ?

वृष्टौ चित्तं मम धावितमयि

लुण्ठितमुद्धतमरुता

मानमलब्ध्वोरसि मम लहरी

कस्य नु चरणे पतिता ?

अद्य हि चित्ते कः कलसङ्गः

द्वारे द्वारे ह्यर्गलभङ्गः ।

अद्य हि भाद्रे हृदयस्यान्तः

जागरमापोन्मादतरङ्गः ।

अस्मिन् दिवसे कः खल्वेवं

मत्तो भवने बहिरप्यङ्ग !

## २८

'प्रभु, तोमालागि आँखि जागे'

प्रभो ! त्वदर्थं नयनं सजागरं
न लभ्यते यद्यपि दर्शनं तव ।
मार्गस्तथापीश ! तवाभिवीक्ष्यते
तदप्यहो मे हृदयाय रोचते ।
मामक-भिक्षुक-हृदयं हा रे !
सुसमासीनं धूलौ द्वारे
तवैव करुणां सम्प्रार्थयते ।
यद्यपि नैनामयमुपलभते
तथापि केवलमेषोऽर्थयते ।
तदपि रतिं मे मनसस्तनुते ।
अद्याध्येतद्भुवनागारं
कर्त्तुं ससुखं कियदाचारम्,
पुरतः सर्वे प्रगताः ।
न लभे यद्यपि कमपि सहायं
त्वामभिलिप्से तथाप्यमायं
तेनाप्यन्तःसुखिता ।
परितोऽमृतरसधारानिचिता
श्यामलधरणी पर्य्याकुलिता
प्रेम्णा प्रसभं क्रन्दयते ।
नहि नहि भवतः साक्षात्कारः
तेन हि चित्ते दुःखविकारः ।
तदपि रतिं मे हृदये कुरुते ।

'धने जने आछि जड़ाये हाय'

सक्तोऽहं धनजनयोर्यद्यपि
विद्धि मनस्त्वां वाञ्छति तथापि ।
अन्तर्निवसस्यन्तर्यामिन् !
मत्तो मां बहु वेत्सि स्वामिन् !
सुखदुःखेनाखिलविस्मृत्या
विद्धि मनस्त्वयि लुब्धं रत्या
नाहङ्कारं मोक्तुं शक्तः
शिरसि तमुद्धृत्वा भ्रमणे युक्तः !
मोक्तुमलब्धे द् वृणुयां शान्तिं
विद्धि त्वयि मे मनसः कान्तिम् ।
ममास्ते हि यद् यत् कदा तत्समग्रं
ग्रहीतास्यशेषं स्वहस्तेन हि त्वम् ?
जहत् सर्वमाप्स्यामि सर्वात्मकं त्वां
रहो वाञ्छति त्वां मदीयान्तरात्मा ।

## ३०

'एइतो तोमार प्रेम ओगो हृदयहरण'

इदं हि ते प्रेम मनोमोहन हे !
एषा किल कनकविभा नृत्यति यत् पत्रगता ।
यन्मधुरालस्यमयं संप्लवते घनोऽम्बरे,
स्नावयते समीरणो यच्च सुधां कलेवरे,
इदं हि ते प्रेम मनोमोहन हे !
प्रभातरोचिषां चयैर्ममाप्लुतं विलोचनं
तवानुरागवैखरी किलेयमस्पृशन्मनः ।
अदस्तवाननं नतं मुखे ममाक्षि चार्पितं
मदीयमद्य मानसं समस्पृशद् भवत्पदम् ।

## ३१

'आमि हेथाय थाकि शुधु गाइते तोमार गान'

अहमत्र यथा हि केवलं
तव गीतौ निरतो भवाम्यहो !
भवदीयजगत्सभातले
वितरेयन्मितमेव मे पदम् ।

भवतो भुवनान्तरे ह्यहं
नहि नाथ ! क्वचिदप्यपेक्षितः ।
स्वनति स्वरवाहि केवलं
कृतिशून्यस्य ममेदमन्तरम् ।

निशि नीरवदेवमन्दिरे
भवदाराधनसाधनं यदा ।
अयि देव ! तदा हि मां दिशे-
र्भवदालम्बनगीतकर्मणे ।

नभः परिव्याप्य यदा किलोषसि
वीणानुसक्ता रणितं वरस्वरम् ।
तदा भवेयं न यथा हि दूरती
मानस्तथा मे प्रवितीर्य्यतां त्वया ।

## ३२

'दाओ हे आमार भय भेङे दाओ'

साधय साधय मम भयभङ्गं

मम दिशि मुखमभिवर्त्तय हे ।

पार्श्वान्नालं त्वां परिचेतुं

किं पश्यामीत्यपि निर्णतुम्

त्वमसि ममान्तरचारी हे ।

मामकमन्तःकरणं प्रति तव सस्मितदृष्टिं पातय हे ।

वचनं मां प्रति वद वद हे,

गात्रे स्पर्श मम तनु हे,

प्रसृतं कृत्वा दक्षिणहस्तं त्वमसौ मामुद्वर्त्तय हे ।

यद् यज्जानेऽखिलमयथार्थं

यद् यन्मृगये तदपि मृषा हे ।

हास्यं मिथ्या रुदितं मिथ्याभ्येत्य भ्रममिममर्दय हे ।

## ३३

'आबार एरा घिरेछे मोर मन'

परिवृतमेभिः पुनरन्तर्मे
नयने पुनरपि वृतिरवतीर्णा
पुनरप्येतन्नाना वृत्तं
क्रमशो व्रजति पुञ्जोभावम् ।
नानादिक्षु च समुपागच्छति मम हृदयं भ्रमणाकुलभावम् ।
क्रमवृद्धिं पुनरेति च दाहः पुनरपि चरणच्युतिरिव कीर्णा ।
तव,—नीरववाणी हृदयतले मम,
मज्जतु मा जनकलकलमध्ये,
अधिनिखिलं ननु तिष्ठ मया सह,
नियतं मामावृणु तव मध्ये,
उदारभुवनत्रयमालोकित-
मासय मम चैतन्ये सिद्धे ।

३४

'आमार मिलन लागि तुमि आसछ कबे थेके'

मदीयसङ्गतेः कृते कुतोऽप्युपैषि कालतः
तवेन्दुरर्य्यमा तथा क्व ते वृतिं विधास्यतः।
कियच्चिर-प्रभातसन्ध्ययोः पदध्वनिस्तव
रहस्यमन्तरान्तरे दूतो मां ह्वयन् गतः।
अद्य पथिक! सकलं मम हृदयमश्नुवानः
सावकाशमुदयतीव हर्षः प्लवमानः।
अद्य समय आगत इव,
कृत्यमखिलमवसितमिव,
मरुदुपैति महाराज! तव सौरभरीणः।

## ३५

'एसो हे एसो सजलघन'

उपनम हे उपनम हे सजलघन वर्षणैः
श्यामलाभ-विपुलत्वत्स्नेहपरिमर्षणैः।
एहि मम जीवने,
एहि गिरिशिखर-परिचुम्बनककारी,
छाययावृत्य वनधरणिमपि हारी,
एहि गगनमभिव्याप्य गभीरतरगर्जनैः।
पुलकाञ्चित-कुसुमकुलैर्नीपवनं प्रव्यथते,
प्रतितटिनीपुलिनं कलरोदनमुत्प्रक्रमते।
एह्येहि स्वान्तपूर!
एह्येहि पिपासाहर!
एहि नयनतर्पण! नन्वेहि मनःसन्निहिते।

'पार्‌बि नाकि योग दिते एइ छन्दे रे'

किं त्वं नो शक्ष्यसि किल योक्तुमिह च्छन्दसि रे
स्खलन-प्लवनयोस्तथा भञ्जनस्य हर्षधरे।
पातितश्रुति न किं,
कर्णयसि परिदिशं,
नभसि रवितारकाविधुषु परिसर्पितं,
मरणक-विपञ्चिकागतरणितमद्भुतम्।
पुनः पुनर्ध्वावनया सम्प्रदीप्य हुताशनं
प्रज्वलनप्रवर्त्तिते शर्मणि रे।

उन्मादजनकगीतक-तालैः क्व नु वा धावति,कस्य हि विदितं,
न परावृत्तः पश्यति पश्चाद्
बद्धो नापि च तिष्ठति रे।

लुण्ठन-धावन-चलनप्रभवानन्दोद्वर्त्तितमनसा रे
तदानन्दपदपतनाद्दतवः षण्नत्यपराः
वरणगीतसौरभतः प्लावनमिह वहति रे।
क्षेपणकृतिवर्जनकृतिमरणजनितसुखादरे।

३७

'निशार स्वपन छुट्ल रे एइ छुट्ल रे'

एष मदीयो नंशस्वप्नो विरतस्तावद् विरतो रे।
बन्धनमपि च त्रुटितं तावत् त्रुटितं रे।
विघटितमन्तरकव्यवधानं
व्यदर्धां जगदभि बहिरवतरणम्।
अन्तरशतदलनिखिलदलानां
भेदोऽयमजनि सोऽजनि रे।

मम द्वारभङ्गं विधायावसाने
त्वमागत्य यावत् स्थितः सन्निधाने
तदा नेत्रनीराप्लुतं दीनहृन्मे
लुलोठ प्रकामं पदाम्भोरुहाधः।

प्रभातप्रभासञ्चयः शून्यमार्गात्
करस्य प्रसारं व्यधत्ताभितो माम्।
मदाभग्नकारागृहद्वारि तावत्
जयाघोषणोद्गता प्रोद्गता रे।

## ३८

'शरते आज कोन् अतिथि एल प्राणेर द्वारे ?'

अद्य शरदि को न्वतिथिर्मनोद्वारमापद्रे ?
हृत् सुखस्य गीतं कुरु सुखस्य गीतं कुरु रे।
नीरवनीलाभ्रकथा शिशिराक्तव्याकुलता,
अद्य भवतु रणिता तव वीणाप्रतिगुणान्तरे।

शस्यक्षेत्रोत्तमसङ्गीते,
यत्नं कुरु समतानं मिलिते,
पूर्णतटिन्याः स्रोतसि विमले
प्लवमानं कुरु तानं तरले
य आगतस्तस्य मुखं गाढसुखं लोकय रे।
वहिर्याहि तेन समं द्वारमपावृत्य च रे।

## ३९

'हेथा ये गान गाइते आसा आमार हय नि से गान गाओया'

इह यद् गातं गीतं मिलितं तन्नहि समभूद्गीतम्
अद्यापि स्वरशीलनमात्रं गातुं मम केवलमभिलषितम् ।

न खलु स स्वरः समगतात्र मे
न खलु सा कथा मम गता चितिम् ।
मनसि केवलं गीतिचापलं
न कुसुमं तदद्यापि काशितम् ।
मरुदवादहो कोऽपि केवलम् ।
नहि मुखं मया तस्य वीक्षितम्
न च मया श्रुता तत्सरस्वती,
प्रतिपलोदयं तस्य कर्ण्यते
केवलं मया चरणशब्दितम् ।
अभिमुखाध्वना द्वारकस्य मे
स हि जनो विधत्ते गतागतम् ।

आसनपातनमेव ममाभूद् व्याप्य समग्रं दिवसं
न गृहे दीपज्वालनमघटत तस्य विधास्ये कथमाहूतम्,
तदधिगमाशामस्मि दधानस्तस्य तु न समासादनमुदितम् ।

'या हारिये याय ता आगले ब'से रइब कत आर'

विघटते हि यत् तद्व्यपेक्षया
कियदनेहसो यापयाम्यतः ।
न हि सहे पुनर्नैशजागरं
न च निरन्तरं नाथ ! भावितम् ।
दिवसमस्म्यथो व्याप्य यामिनीं
मम विधाय हे द्वारमावृतम्
इह य ईहते वेष्टुमन्तरं
तमपवाहयेऽसकृत् संशयात् ।

मम किलैककस्यालये ततो
भवति कस्यचिन्नैव सङ्गतिः ।
सुखमयं त्वदीयं चराचरं
बहिरहो मुहुः क्रीडने रतम् ।
त्वमपि मन्यते नैषि पद्धतिम्
अपि पुनः पुनर्यास्युपागतः ।
यदभिरक्षितुं कामये, स्थिरं
तदपि नैव हा, धूलिभिस्ततम् ।

'एइ मलिन वस्त्र छाड़ते हबे हबे गो एइवार'

साम्प्रतमेतन्मलिनं वसनं हेयमवश्यं हेयम्

एतन्मम मलिनाहङ्करणम्।

दिनकृतिजालैः पांशुकसङ्गाद्,

बहुलकलङ्कै रजनि सचिह्नम्।

एवमुपागत-तापं समजनि,

येन न सोढुं शक्यमदैन्यम्।

एतन्मम मलिनाहङ्करणम्।

इह तु दिनान्ते कर्मावसितम्,

समजनि तस्यागमने समयो

हृदयाशायाः स्फुरणं जातम्।

स्नात्वोपैहि तदधुना प्रेमावरणं नियतं धार्य्यमये!

चितसन्ध्यावनकुसुमस्तोमैर्मालारचनं कार्य्यमये!

समयो नातः परमवशिष्टः

साधय रे तत् सविधागमनम्।

'गाये आमार पुलक लागे'

मामकदेहे पुलकः प्रसर-

त्युपसरति दृशोरस्पष्टत्वम् ।

हृदये कः खलु मम समबध्नाद्

राक्षिकबन्धनदाम सुरक्तम् ?

अद्य किलास्मिन्नाकाशतले,

फल-कुसुम-स्थल-सलिले ।

हे मानसहर ! नु कथङ्कारं,

ततमकृथा मम चित्तम् ।

अद्याजायत कीदृशखेला,

त्वयका सार्द्धं मम हे !

किमिव प्रापं तन्मृगयेऽहं

विन्दे चेतसि नहि हे !

अद्यानन्दः कस्य व्याजाद्

विलपितुमिच्छति लोचननीरैः ।

अद्य वियोगः सुमधुरभूत-

श्चित्तं विह्वलमकुरुत हे !

'प्रभु,—आजि तोमार दक्षिण हात रेखो ना ढाकि'

अद्य विभो ! तव दक्षिणहस्तं
मा प्रच्छन्नं वर्त्तय हे !
नाथ ! भवन्तं परिधापयितुं
राक्षिकबन्धनममिलं हे !
बध्नीयां यदि तावकहस्ते,
बन्धं विन्देयं हि समस्ते,
यत्र किलास्ते यो यः, कश्चित्
तत्र न शिष्टः स्थास्यति हे !

न परापरयोरद्य भिदास्ता-
मेको भायास्त्वं वहिरन्तः ।
भवता सार्द्धं यद्विच्छेदाद्
विलपन्नभितो भ्रमणं कुर्वे,
सम्बोधयामि तं व्यपनेतुं
विच्छेदं क्षणसमयं हे !

'जगते आनन्दयज्ञे आमार निमन्त्रण'

जगति महानन्दमखे मम हि निमन्त्रणम् ।
धन्यमजनि धन्यमजनि मानवजीवनम् ।

नयनं मम रूपपुरे,
यथेप्सितं भ्राम्यति रे,
मम गभीरतमस्वरे
श्रवणमकृत निमज्जनम् ।
भारमदा यज्ञे तव वादयामि वंशिकां,
गानैर्घटयन्नटामि रोदनमथ हासिकां,
सम्प्रति किमु समयोऽजनि,
सदसि त्वां यदाऽऽयानि,
अभिश्राव्य जयध्वनिं यायामिति निवेदनम ।

४५

'आलोके आलोकमय क'रे हे'

आलोकेनालोकितं संविधाय

त्वं ह्यालोकालोक ! यातः समीपम् ।

मन्नेत्राभ्यामन्धकारानुबन्धो

दूरे यातो नाथ ! दूरे हि यातः ॥

सकलनभःश्रीः सकला धरणी, हास्यानन्दव्याप्ता समजनि ।

विदधे यस्यां दिशि दृक्पातं शातं तत्र हि निखिलं शातम् ।

वृक्षपलाशे भवदालोको जनयति चित्ते नृत्यम् ।

विहगकुलाये भवदालोको जागरयति सङ्गीतम् ।

भवदालोकः प्रणयवशान्मे गात्रे न्यपतदुपेतः ।

हृदि मम निर्मलकरतललालनमेष व्यधित व्यधित ॥

'आसनतलेर माटिर परे लुटिये रव'

आसनतलमृत्स्नोपरि लुण्ठन् वर्त्तिष्ये,
तावकपदरजसा किल धूसरतां धास्ये ।
कथमिव मह्यं मानं दत्त्वा रक्षसि मामयि ! दूरे ।
सुचिरं यावन्नैवङ्कारं पातय हे भ्रमपूरे ।
असम्मानमासय ते कर्षन् पददास्ये
तावकपदरजसा किल धूसरतां धास्ये ।

अहं भविष्यामि भवद्यात्रिगणस्यानुचरः,
निखिलनिम्नपदे पदं त्वं मह्यं हे वितर ।
कति प्रसादाय जना उपायान्ति सज्जवनाः
न किञ्चिदर्थयिष्यते मया तु लोकयिष्यते ।
यदेव सर्वपश्चिमे स्थितं तदेव धास्यते
त्वदीयपादपांशुभिर्धूसरता वरिष्यते ।

## ৪৭

'রূপসাগরে ডুব দিয়েছি অরূপ রতন আশা করি'

अरूपरत्नकाम्यया न्यमज्जि रूपसागरे
न घट्टकेषु वै मया भ्रमिष्यते ह्यतः परे,
जीर्णां मम तरीं जले प्लवमानां विधाय रे।
लहरीसंहतिभोगसमाप्तेरस्मिन् वारे समयो भूयात्।
अस्मिन् वारेऽमृतरसमग्नो मृत्वामरतां यायां पश्चात्।
श्रवणातीतं यत् खलु गानम्,
तदिदं यस्मिन्नित्यंध्वानम्,
तदतलसमितौ प्राणविपञ्चीसहितो यास्याम्यधिकृतगीतम्।
कृत्वा सुचिरस्वरसंवादं,
चरमजगीत्या प्रकटितरोदं,
उपनेष्याम्यहमरवां वीणां तस्य पदे, यन्मौनं लसितम्।

'आकाशतले उठल फुटे आलोर शतदल'

अधिनभो विकसितं ह्यालोकशतदलम् ।
पंक्तिशः प्रतिदिशि प्रसृमरं दलकुलम् ।
छादितं तिमिरमयमत्यसितरुचि जलम् ।

मध्यतः कनकमयकोषे,
अहमसमसुखमयि ! किलासे,
माञ्च परिवृत्य समकालं
मन्दमभिकीर्य्यते ह्यालोकशतदलम् ॥

नभसि लहरीमयः प्रवहति समीरणो
दिक्षु च प्रध्वनति गीतिः ।
प्रतिदिशि च मानसं नृत्यति च धावति,
स्पर्शनं चितगगनमखिलवपुरश्चति,
सुविहितनिमज्जनः प्राणमयसागरे,
कामतः प्राणचयमेमि
पुनः पुनरुपगतो मम हि परिवेष्टनं
साधयन् वात इह वाति ॥

आशादशके पातितवसना
व्यतरत् स्वीयं क्रोड़ं मृत्स्ना
विहरति जीवो यः खलु यस्मिं-
स्तमुपामन्त्रयानयति समं सा ।
पाणिषु जगतां पात्रे जगतां
दत्ते सान्नं वण्टनविधिना ।
पूरितमन्तर्गीतैर्गन्धै-

रुपविष्टोऽस्मि प्रचितानन्दैः,
मां परिवेष्ट्य विसारितवसना
व्यतरत् स्वीयं क्रोडं मृत्स्ना ॥

आलोक ! त्वां नमामि मम यात्वपराधः,
रक्ष्यतां ललाटे मम पितुराशीर्वादः ।
हे वायो ! त्वां नमामि मम यात्ववसादः,
मर्श्यतामखिलाङ्गेषु पितुराशीर्वादः ॥
हे मृत्स्ने ! त्वां नमामि फलतु ममाखिलार्थना,
गृहपूरं पितुराशीः प्रसाध्यतां फलविधिना ॥

'হেথায় তিনি কোল পেতেছেন আমাদের এই ঘরে'

अस्मदीय इहालये तेनाङ्कः प्रसारितः ।
तदासनं सज्जय हे सखे ! स्वचित्तकामतः ॥
सहर्ष-गानकर्मणा मार्जय हे रजोऽखिलम् ।
प्रयत्नेन दूरीकुरु पूर्वचितं सर्वमलम् ।
पात्रपूरमम्बु किरन् वर्त्तय पुष्पसञ्चयम् ।
तदासनं सज्जय हे सखे ! यथान्तराशयम् ॥

दिनयामिन्यौ स्थितिमधिकुरुते
सोऽयमिहास्मद्गेहे ।
प्रातर्हास्यं तस्यैवाभा
पतति किरद् भूदेहे ।
यावदिहोषसि जागरमाप्त्वा
पश्यामोऽक्ष्युन्मीलम् ।
तावत् पश्यामोऽतिसुखोऽसौ
पश्यति सुस्थिरलीलम् ॥

तस्यैवास्यप्रसन्नभावैः प्रपूर्त्तिरखिले गेहे ।
प्रातर्हास्यं तस्यैवाभा पतति किरद् भूदेहे ॥
स एकको वसति किलात्र नो गृहे
यदा वयं निजविधयेऽन्यतो गताः
स याति नो द्वारसमीपमापयन्
प्रधावनं पथि ससुखं श्रयामहे
मनोमुदा गानमपि प्रकुर्महे ॥
दिनात्यये विविधविधानतः परं

यदा वयं भवनमुपागताः पुनः ।
तदा विलोकयामहे स एकको
वसत्यहो भवन इहास्मदीयके ॥
गृहेऽत्र नो वसति स वै जागरितो
यदा वयं शयनगता अचेतनाः ॥

जगति कोऽपि न वीक्षते गुप्तां तत्प्रदीपिकां
अन्तरयन्नञ्चलेन तां ज्वलयति सर्वनिशाम् ॥
स्वप्नाः कति सुप्तौ किल संविदधति गतागतम् ।
स विदधाति तिमिरमये नो निलयेऽस्मिन् हसितम् ॥

## ५०

'निभृत प्राणेर देवता येखाने जागेन एका'

गुप्तो मानसदेवो यस्मिन्नस्ति सजागर एकः
भक्त! द्वारं तत्रोद्घाटय कार्य्यो ऽद्य तदालोकः।
वहिरेव दिनं सर्वं भ्राम्यन् कस्य रतोऽहं कामे
सन्ध्यासमयारात्रिकशिक्षा नहि समपद्यत हा मे।
जीवनदीपेन तव ज्वलयन् जीवदीपिकां
पूजक! मम निभृतमद्य सज्जयितास्मि पात्रिकाम्।
पूजालोकं रचयति यत्र निखिलसाधना,
तस्मिन्नहमपि तनुयां रुचिरेखामात्मना।

'कोन् आलोके प्राणेर प्रदीप ज्वालिये तुमि धराय आस'

केनालोकेनान्तर्दीपं ज्वलयंस्त्वं समुपैषि धराम् ?
अयि भोः प्रेमिक ! साधक ! हंहो क्षीव ! त्वं समुपषि धराम् ?
अत्रापारे खलु संसारे दुःखाघातस्तव हृदगारे,
वीणाझङ्कृतिमातनुते ।
सुतरां भीषणविपदो मध्ये मातुः कस्या हास्यं वदने,
दृष्ट्वा हास्यं तव समुदयते ?
त्वं कस्यान्वेषणकृतिनिरतः सकलसुखेऽग्निं ज्वलयन् हे
विहरसि कस्तज्जानीते ?
एवं व्याकुलभावं नीत्वा कस्ते क्रन्दं जनयति हे,
यत्र प्रीतिस्तव घटते ?
नास्ते तव किल काचन चिन्ता कस्तव सहचरभावं धत्ते,
हृदि तच्चिन्ता प्रसरति हे ।
विस्मृत्य त्वं मृत्युं घोरं कुत्रानन्ते चितसुखभारं
प्राणपयोधौ प्लवसे हे ?

## ५२

'तुमि आमार आपन तुमि आछ आमार काछे'

निजजनस्त्वं मम, त्वमसि मम सन्निधौ
वक्तुमिदमवसरं देहि मम देहि ।

देह्यमृतभृत्स्वरं कुरु सुमधुरां गिरम्
प्रियतमस्त्वमसि मम वाढम्,
वक्तुमिदमवसरं देहि मम देहि हे ।

क्षितिरियमिदं नभस्त्वदनुगतिपूरितम्
निखिलमिदमन्तरतलान्मे
वक्तुमिदमवसरं देहि मम देहि हे ।

दुःखिनं संविदन्नुपसरसि सन्निधिम्
लघुरिति स्नेहमपि दत्से ।
मम लघोर्वदनतः
वक्तुमिदमवसरं देहि मम देहि हे ।

## ५३

'नामाओ नामाओ आमाय तोमार चरणतले'

नमय नमय मां खलु ते चरणतले ।
हृदयं मे द्रवतां नय जीवनमपि नयनजले ना प्लावय ।
एककोऽहमहंकारमये समुच्छ्रिताचले,
कृत्वा बलनियोजनं भिन्धि शिलामयासनं
परिलोठय तच्च भृशं धूलिकुले ।

नमय नमय मां किल ते चरणतले ।
केन करोम्यहङ्कृतिं व्यर्थजीवने,
त्वया विना रिक्तोऽहं पूर्णकेतने,
दिवसकर्म निखिलं मम मग्नं किल निजातले ।
सान्ध्यसमयपूजा मम विशतु तथा न वैफले ।
नमय नमय मां किल ते चरणतले ।

'आजि गन्धबिधुर समीरणे'

अद्य हन्त ! गन्धविधुरसमीरणे,
कस्य समन्वेषणाय चराम्यहं वने वने ?
अद्य क्षुभिते सुनीलगगने किमिदं लोलविलाप-ध्वनितम् !
स्पृशति कृतिं मे तथैव चिन्तां दूरदिगागतसकरुणगीतम्
मनसि तदन्तः कमहं मृगये गन्धविधुरसमीरणे ।
अये ! न वेद्मि केन वा नन्दनरागकर्मणा,
सुखेन सत् समुत्सुकं यौवनमेति जागृतिम् ।

आम्रमुकुलसौरभेण
नवपल्लवमर्मरेण
चन्द्रकिरणसुधासिक्तगगने
महानन्दसमुपजातवाष्पराशिसरसः
स्पर्शनेन कस्य सता पुलकितोऽहमद्य परं
गन्धविधुरसमीरणे ।

## ५५

'आजि बसन्त जाग्रत द्वारे'

अद्य वसन्तः स्फुरितो द्वारे।
तवावगुण्ठितकुण्ठितजीवनदशया नहि किल वञ्चय तं रे।
अद्य,—मोचय मोचय हृदयद्वारं,
विस्मर बिस्मर परमप्यपरम्,

इह गीतस्वरमुखरितगगने लहरीभाजं कुरु तव गन्धम्
किर माधुर्य्यं भृतबहुभाण्डाद् विमुग्धचित्तं बहिरागारे
निविडतमा हि वेदना वनान्तरे,
प्रतिपल्लवमद्य परं रणति रे।

दूरनभसि कस्य पथि न्यस्तबिलोचना सती
व्याकुलिता वसुन्धरा स्वं समलङ्करोति रे?
मम हृदयं स्पृशति दक्षमारुतः,
कं वाञ्छति कराघातकरः प्रतिद्वारतः?

एषा किल विभावरी सौरभविह्वलायिता,
कस्य पदव्यपेक्षया क्षौणितले जागरिता?
अयि सुन्दर! कान्त! हृदयवल्लभ हे!
सुगम्भीरमामन्त्रणमेतत्तव कुत्र वरे?

## ५६

'तब सिंहासनेर आसन थे'के एले तुमि ने'मे'

त्वदधिष्ठानात् सिंहासनतस्त्वं ह्यवतीर्णः समुपायातः,
उपमन्निर्जनभवनद्वारे नाथ ! स्थगितगतिः सञ्जातः ।

एकक उषितः स्वेन हि मनसा
गीतं गायन्नासम् ।
त्वच्छ्रुतिमविशत्तत्स्वरधारा
त्वं ह्यवतीर्णः समुपायातः,
उपमन्निर्जनभवनद्वारे
नाथ ! स्थगितगतिः सञ्जातः ।
भवतः परिषदि कियदिव गानं
सन्ति च कति वा निपुणाः !

अद्य तु निर्गुण-जनसङ्गीतिः
प्रेम्नि तवाहितरणना ।
अधिविश्वस्वरमेकः करुणः,
स्वर आकर्षद् भवतश्चेतः ।
हस्तेन त्वं वरणकमाल्यं
दधदवतीर्णः समुपायातः ।
उपमन्निर्जनभवनद्वारे
नाथ ! स्थगितगतिः सञ्जातः ।

'तुमि एबार आमाय लहो हे नाथ लहो'

त्वं,—गृहाण मां नाथ ! गृहाण साम्प्रतम्
पराङ्मुखो मा भव मा भवाधुना ।
बलात्कारहृतान्तरस्तिष्ठ च हे ।
त्वया विना गतं दिनं न जातु कामये पुनः,
धूलिचये तद् विलयं गच्छतु हे ।
तवालोकविशेषतोऽधुना प्रसार्य्य जीवनम्,
प्रतिक्षणं लसतु मम प्रबोधनम् ।

किमावेशतोऽहं किमीयाच्च वादात्
पथि प्रान्तरे वाऽचरं यत्र तत्र ?
अदस्ते मुखं न्यस्य वक्षःसमीपे
स्ववाणीमिदानीमभिव्याहर त्वम् ।
कियत् कल्मषं मे कियान् विप्रलम्भः
वशिष्टे मनोगुप्तदेशेऽधुनापि ।
न तद्दोषतो वैमुखं मे विदध्याः
हुताशेन तद्दोषराशिं दह त्वम् ।

## ५८

'जीबन यखन शुकाये याय'

जीवनं यदा याति शुष्कता-
मेहि हे कृपाधारया तदा।
सर्वमाधुरी लुप्यते यदा
गीतिकामृतैरेहि हे तदा।

कर्म सगर्वं प्रबलं यावत्
पार्श्वचतुष्कं कुरुते च्छन्नं
नीरव नाथ! स्वान्तप्रान्ते
तावदुपेयाः प्रशान्तचरणं।
नीत्वा यावत् कार्पण्यं स्वं
काणे पतितं हृदयम् दीनं।
त्वमपावृत्य द्वारमुदार!
क्षितिपतिरिव कुरु नाथागमनम्।
कामो यावन्महता रजसा
कृत्वान्धं मां लुप्तविवेकम्।
नयति भ्रान्तिं पूतानिद्र!
प्राप्नुहि तावद्र् रुद्रालोकम्।

'एबार नीरब क'रे दाओ हे तोमार मुखर कबिरे'

तव मुखरं कविमधुना प्रापय हे नीरवताम् ।
वादय मांसलं स्वयं समाच्छिद्य तस्य हि हृद्वेणुलताम् ।
निशीथिनीनिविडतरस्वरेण हे
प्रपूरितां प्रकुरु सुचारुवंशिकाम् ।
स्वरेण येनानयसे सुविस्मयं
ग्रहोच्चयं शिशिरकरञ्च भामयम् ॥

यत् किञ्चन मम जीवनमरणे
प्रसृतिं संश्रितमास्ते ।
गीताकर्षात् तव तत् सर्वं
मिलताच्चरणे शस्ते ।
बहुदिवसीयो वचनचयः स्या-
देकनिमेषेणापगतः,
अकूलतिमिरे मुरलीगीतं
श्रोष्याम्येकः सन्तुषितः ॥

## ६०

'विश्व यखन निद्रामगन गगन अन्धकार'

यदा सुप्तिमग्नं समग्रं हि विश्वं,
यदा चान्तरिक्षं तमःस्तोमरुद्धम् ।
तदा को विपञ्चीगुणान्मे प्रसूते,
स्फुटाकारझङ्कारमेवम्प्रकारम् ?
व्यलुम्पन्मदीयाक्षियुग्मस्य सुप्तिं,
परित्यक्ततल्पा प्रबुद्धा वसामि ।
समुन्मील्य नेत्रे स्थिता वीक्षमाणा,
परं तस्य साक्षात्कृतिं नाभिविन्दे ॥

हृदयमजनि परिपूर्णं गुञ्जदिवाव्यक्ततरं
न वेद्मि का वाङ् महती ध्वनति किलाकुलस्वरम् ।
न वेद्मि हा किंव्यथया चित्तमश्रुभारचितम्
स्वगलहारमर्पयितुं कस्य गले ममेहितम् ?

६१

'से ये पाशे ए'से व'से छिल, तबु जागि नि'

आस्त स मे पार्श्वगतस्तदपि न मे जागरणम् ?
किं त्वां हा हतभागिनि ! सुप्तितमः प्राप घनम् ।
स निःशब्दनिशाक्षणे करस्थवीणयागतः,
स्वप्ने किल सुसञ्चार्य गभीररागिणीमितः ।
जागरिता ह्यन्वभवं मलयानिलमुन्मदयत्,
सौरभमस्य प्लवते व्याप्य तमःसमुच्चयम् ।
कथं ममात्येति निशा, सविधगतोऽपि नाप्यते,
कथं नु तन्मालिकया न हि स्पृष्टमुरःस्थलम् ?

'তোরা শুনিস্ নি কি শুনিস্ নি তার পায়ের ধ্বনি'

न श्रुतवन्तो न श्रुतवन्तः किं ननु यूयं तत्पदशब्दम् ?
एति किलासावेति किलासावेति किलासौ चिरमुपलब्धम् ।
प्रतियुगयोगं प्रतिपलभोगं प्रतिदिनरजनीकालं,
स उपागच्छति स उपागच्छति स उपागच्छति लोलम् ।
यावद् गीतं यावद्गायं क्षीवेवाहं मनसा स्वेन,
तावत् सर्वस्वरसञ्चारे ध्वनितं तस्यागमगीतेन ।
स उपागच्छति स उपागच्छति स उपागच्छति पादरवेण ।
अवधिविवर्जितचिरकालीने फाल्गुनदिवसे वन्यपथेन,
स उपागच्छति स उपागच्छति स उपागच्छति संविततेन ।
मेघरथेनागणितश्रावणमासनिबन्धनतिमिरे,
स उपागच्छति स उपागच्छति स उपागच्छति रुचिरे ।
दुःखात् परतः परमे दुःखे,
वक्षसि तत्पदसङ्गमभीक्षे,
सुखसम्पाते स किल कदाचित् स्पर्शमणिं संमर्शयते,
स उपागच्छति स उपागच्छति स उपागच्छति सन्निहिते ।

'मे'नेछि हा'र मे'नेछि'

स्वीकृतवानहं हन्त पराजयं स्वीकृतवान् ।
त्वां हि यावदुपेक्षितुं चेष्टितवान्,
स्वं सुतरां हन्त तावदाहतवान् ।
मदन्तराकाशतलात् त्वां व्यवधास्यते कोऽपि,
कथमपि तत् सह्यमिदं नेत्यसकृत् प्रोहितवान् ।
छायया सदृशक्रमा व्यतीतजीवनक्रिया,
अनुवर्त्तनमारचयति निरन्तरस्पृष्टिकया ।
नियतममितमायामयवंशीस्वरयोजनया,
आमन्त्रणमातनुते वितथभावभावनया ।
तेन हि साकं भावस्त्रुटितः,
हस्ते तेऽहं वशमुपयातः ।
एतज्जीवनसञ्चितमखिलं,
द्वारं तेऽहं प्रापितवान् ।

'एकटि एकटि क'रे तोमार पुरानो तार खोलो'

एकैकश इह मोचय तन्त्रीं प्रत्नां स्वीयां तव निर्वाधम्।
अभिनवरूपेणारचय त्वं तन्त्रीवाद्ये स्वरसंवादम्।
व्यघटत दिवसस्योत्सवमेला प्रारम्भः स्यात् सान्ध्यसभायाः,
अन्तिमगीतं यो वादयिता तस्यागमने समयः समया,
अभिनवरूपं संस्कुरु तन्त्रीयन्त्रं सुस्वरयोजनया।

द्वारं तव समपावृणु
तिमिरावृतगगने,
सप्तलोक- नीरवताऽ-
गच्छतु तव भवने।
इयत्काल- मभिव्याप्य
गीतं यद् गानम्।
अद्य तस्य भवतु नाम
नियमादवसानम्।
यन्त्रमिदं तावकमिति
विस्मरैव वादं।
सतन्त्रीक-यन्त्रे कुरु नवरवसंवादम्।

'कबे आमि बाहिर ह'लाम तोमारइ गान गे'ये'

बहिरभवं कदा न्वहं त्वदीयगीतिसाधनः,
अदूरतो न स क्षणो ह्यदूरतो न स क्षणः।
विस्मृतवान् कदा-प्रभृत्यहं त्वदर्थनाधनः,
अदूरतो न स क्षणो ह्यदूरतो न स क्षणः।
प्रस्रवणं नाम यथा बहिः पदं संश्रयते,
न वेत्ति तत् कस्य किल प्रार्थनया प्रवर्त्तते।
तथैव जीवनस्रवे कृतप्लवः समागतः,
न स क्षणो ह्यदूरतो न स क्षणो ह्यदूरतः।
कियद्भिरेव नामभिः पुरामन्त्रणमाहितं,
कियच्च चित्रकं मया पूर्बमितः समङ्कितम्।
कया मुदा चलामि तद्विनिर्णीति-वियोगतः,
न स क्षणो ह्यदूरतो न स क्षणो ह्यदूरतः।
प्रसूनमालोककृते यथा हि बोधवर्जितं,
विभावरीं यापयति प्रतिक्षणं जागरितम्,
तथैव ते प्रतीक्षया व्याप्तं मम चिरं मनः।
अदूरतो न स क्षणो ह्यदूरतो न स क्षणः।

'तोमार प्रेम ये बइते पारि एमन साध्य नाइ'

तव प्रेम वोढुं न मे नाथ! शक्तिः,
ततस्त्वाद्य माध्यान्तरात्र प्रपञ्चे,
व्यधास्त्वं कृपातो ह्यनेकान्तरं स्वं,
वृतीकृत्य दुःखं सुखं स्वं स्वमानौ।
यथा कृष्णमेघावकाशेषु शून्ये,
सहस्रांशुरेखा भवत्यल्पदृश्या,
तथैवान्तराले निमेषे निमेषे,
त्वमस्पष्टसन्दर्शनं भो ददासि।
असीमं तव प्रेमभारं प्रवोढुं,
प्रदत्से हि यस्मै जगन्नाथ! शक्तिम्,
तदीयां समग्रावृतिं वीतशेषं,
विधत्से दयापूर्वकं सन्निवृत्ताम्।
न गेहेन तस्यावृतिं सोढुमीशे,
धनं तस्य नष्टं करोषि प्रकामम्।
पथि स्थापयित्वा निरस्तावशेषं,
भृशाकिञ्चनत्वं तदीयं तनोषि।
न मानापमानौ न लज्जा न भीतिः,
स्थितिं तत्र कुर्वन्ति खल्वंशतोऽपि।
यदत्र प्रपञ्चे समग्रं विभाति,
तदेकस्त्वमेवासि तस्य प्रभो हे!
त्वदास्याभिमुख्येन वृत्तिः किलैवं,
त्वदीये समीपे त्वया हृत्प्रपूर्तिः।

दयां ते य आपत्तयोः प्राप्तिहेतुं,
न लोभस्य तस्यास्ति सीमा हि काचित ।
स तुभ्यं प्रदातुं पदं योग्यरूपं,
परं लोभजातं निरस्यत्यशेषम् ।

६७

'सुन्दर ! तुमि ए'सेछिले आ'ज प्राते'

सुन्दर हे ! प्रातरद्य भवानुपागतः,
स्वीयकरे रक्तवर्णपारिजातयुतः।
पुरी तदा सुप्तिगता, पथिको नहि चलति पथा,
प्रस्थितस्त्वमेक एव तव सुवर्णरथे स्थितः।
सकृत् खलु स्थगितगतिर्मम हि गवाक्षकं प्रति,
करुणनयनपातं त्वं दृष्टिमवीवृतः।
सुन्दर हे ! प्रातरद्य भवानुपागतः।
सौरभेण केन मम स्वप्नोऽजनि पूरितः ?
कया मुदा तिमिरराशिरालयस्य कम्पितः ?
वीणा मम रवच्युता, धूलितले विलुण्ठिता,
अनाहता केन पुनः समारब्धसंरणिता ?
बहुकृत्वो जागरितः स्यामिति कामनाभवत्,
जहत् किलालस्यमरं बहिर्भवामीति च मे ;
यदा पुनः समुत्थितस्तदा गतस्त्वमन्तरं,
ह्यवैमि दर्शनं न ते कदापि भावि भाग्यतः।
सुन्दर हे ! प्रातरद्य भवानभूदुपागतः।

६८

'आमार खेला यखन छिल तोमार सने'

त्वया समं यदा मम क्रीडाविलसितं स्थितम्,
तदा हि कः 'कस्त्व'मिति व्यबुध्यत ?
नैव तदा भयं स्थितं, न च त्रपान्तःकरणे,
जीवनमस्यन्दत चञ्चलायितम्।
प्रत्यूषसि कियन्मम त्वयाऽमन्त्रणमाहितं,
यथा समप्राणमदात्मनीनबन्धुना सता।
हसंस्तदा त्वया समं कियति वने वनान्तरे,
द्रुतां गतिं समाश्रितो व्यधां भृशं सञ्चरणम्।
गीतकानि यानि तदा भवानगायदात्मना,
न कश्चिदप्यर्थमहो तस्य हि कोऽप्यबुध्यत।
केवलं मदन्तरेण तेन सार्द्धमगीयत।
निरन्तरं नृत्यपरं मनो लोलमभासत।
क्रीडनावसितावद्य किं सहसास्ति लोकितम् ?
स्तब्धमही विष्णुपदं वीतरवौ चन्द्ररवी,
तव चरणं प्रति नयनं संविधाय किल नमितम्,
समवस्थितमेकान्तं भुवनमहो सुविस्मितम्।

'ऐ रे तरी दिल खु'ले'

स्थगितगतिस्तरणिरसौ पथि यात्रां बिन्दति रे।
भारं तव को नु जनः समुद्धृत्य नेष्यति रे।
सम्मुखभागे यास्यसि यावत् पृष्ठे पृष्ठं तिष्ठतु तावत्,
पृष्ठेनैतद् वोढुं यतितः संस्थित एकक एव हि तीरे।
प्रोत्तरघट्टं नीता वहता गृहगतभारास्तत एव हि रे।
कर्त्तव्याजनि विस्मृतमेतत् प्रत्यावृत्तिर्वारे वारे॥
आहूय नाविकमाहूय भूयः प्लवमानस्तव गच्छतु भारः।
जीवनमखिलं तव निःशेषं तत्पदमूले प्रोत्सृज रे॥

'चित्त आमार हारा'ल आज् मेघेर माझखाने'

चित्तं मे भ्रष्टमद्य सलिलमुचामन्तरे।
तस्य गतिः किमुपलक्ष्य कुत्र को नु वेत्ति रे।
तस्य हि वीणातन्त्रीभारे चपलाघातो वारे वारे,
कुलिशाहननं हृदयागारे कीदृशसुमहातानं रे।
बहुपुञ्जितबहुसञ्चितनिविडनीलतिमिरम्,
अङ्गमुपालिङ्गति मे व्याप्य हृदयमन्दिरम्।
नृत्योन्मत्तः क्षीवसमीरो मम सहचरतां यातः,
क्व नु खलु धावति स विकटहासं न खलु निषेधं गणयति रे।

## ७१

'ओगो मौन, ना यदि कओ नाइ कहियो कथा'

हे मौनव्रत ! यदि नो कथयेः

कथय कथां नैव त्वम्,

वक्षःपूरं तव नीरवतां

वक्ष्याम्यहमयि नित्यम्।

स्तब्धीभूता वात्स्येऽहं रजनीवातिस्तब्धा,

भं ज्वलयन्ती वीतनिमेषा धैर्य्येणावनताद्धा।

भविता भविता प्रातर्भविता तिमिरं लोपं श्रयिता,

तव वाणीमयकाञ्चनधारा दीर्णाकाशात् पतिता।

तस्मिन् समये मम हि कुलाये तव भाषामयगानमपि स्यात्?

मम वनवल्ली तव नवतानात् कुसुमं नेता किमु विकचत्वम्।

## ७२

'यतवार आलो ज्वाला'ते चाइ निबे याय बारे बार'

यावद्वारं ज्वलयितुमीहे दीपं,

तावद्वारं श्रयति स वत निर्वाणम्।

अधिमज्जीवनमासनकं तव

सुनिविडतिमिरे लब्धस्थानम्॥

अस्ति लता तन्मूलं शुष्कं,

तामभिविन्दति कुट्मलमात्रम्,

न कसति कुसुमं, तव सेवास्मादार्त्युपहारैरधिमत्प्राणम्।

पूजागौरव-पुण्यविभवयोरणुरपि मात्रा नास्ते,

परिहितलज्जाकरलघुवेशस्त्वेष प्राप्तः पूजाकृत्ते।

न महे तस्यायातः कश्चिद्, वंशीगीतं न, न गृहभूषा,

रुदताहूय त्वमुपानीतो भग्नगृहस्य द्वारस्थानम्॥

'सबा ह'ते राखबो तोमाय आड़ाल क'रे'

रक्षिष्यामि त्वां सर्वस्मात् कृत्वा सुप्रच्छन्नम्।
क नु मद्भवने पूजायतनं स्यादेवं प्रतिपन्नम्।
यदि मे नक्तन्दिव-मखिलैः सह
कृपया वितरसि निजसन्धानम्,
धृत्वा वर्त्तयितास्मि तदा त्वां
नियतं सुभृशं लसदवधानम्।
तुभ्यं कञ्चन मानं दास्ये नाहं तादृङ् मानी,
स्वामिन्! न तदायोजनमास्ते येनार्चां करवाणि।
प्रीतिस्त्वयि यदि वंशी भविता स्वयमेवोद्गतरणना,
व्याप्यारण्यं कुसुमश्रेणी गन्ता स्वयञ्च कसनम्।

'बज्रे तोमार बाजे बाँशि से कि सहज गान'

कुलिशे तव किल मुरलीगीतं किं साधारणमेतत् ?
तेन यथाहं जागरितः स्यां देहि श्रवणं तद्वत् ।
लघुना भूयो भ्रान्तो न स्यां मनसि प्राणैस्तैर्मत्तः स्याम् ,
मरणस्यान्तः सन्ति च्छन्ना ये हि निरन्ताः प्राणाः ।
वात्या सास्तां सुखेन सह्या मानसवीणातन्त्र्याम्,
यज्झङ्कारैः सप्त समुद्रानानर्त्तयसि दशाशाः ।
आरामान्मां कृत्वा च्छिन्नं तं सुगभीरं नय परिवेश,
यत्राशान्तेरन्तरशरणे शान्तिर्महती विन्दति देशम् ।

'दया दिये हबे गो मोर जीवन धु'ते'

मम जीवनमपि भवता नूनं करुणापयसा क्षालयितव्यम्,
नो चेत् किमहं शक्तिं यायां स्प्रष्टुं भवतश्चरणं दिव्यम्?
तुभ्यं ददतः पूजाभारं भवति प्रकटो निखिलमलो मे,
तत एवाहं नालं चरणे स्थापयितुं बत मलिनमनो मे।
एतावन्तं कालं नहि मम किञ्चन दुःखं व्यलसत्,
मालिन्यं मे सर्वशरीरे सम्पृक्तं चिरमभवत्।
अद्यादोधवलाङ्ककृते,
व्याकुलचित्तं रोदिति सुभृशं,
न सहस्व त्वं न सहस्व त्वं धूलीशयनमथो मे।

'সভা যখন ভাঙবে তখন শেষের গান কি যাবো গেয়ে'

परिषद् यावद् भग्ना भविता तावदिहान्तोचितसङ्गीतम्,
समुचितरूपस्वरयोजनया ददुपहारं किं प्रस्थास्ये ?
स्याद् वा,-तावद् विघटितकण्ठो मुखमभि निदधद् दशमासिष्ये।
साम्प्रतमपि यो नाजनि रागः किमसौ परतो ध्वनितो भविता ?
प्रेमव्यथितं परतमतानैः सन्ध्यागगनं छादयिता।
मनसा स्वेनैतावत्कालं दिनयामिन्यौ यः किल विहितः,
रागाभ्यासः स हि यदि भाग्याज्जीवनकेऽस्मिन् भवति समाप्तः।
पूर्णमितज्जन्मजवाणीं, मानसवनसम्भवपङ्कजिनीम्,
प्लावयिताहे चरमार्णवमभि विश्वोचितसङ्गीतकतरसा।

## ७७

'चिर जनमेर वेदना'

सुचिरजन्म-दुःखद हे !
चिरजीवनसाध्य च हे ।
तवानलो भवतु चिरं प्रज्वलिता,
दुर्बल इति मास्तु दया त्वयाहिता,
यावन्तं तापमेमि तस्य सोढुमेषणा,
दाहादपि भस्म भवतु वासना ।
आह्वानं यत्नैव हि मोघं कुरु तदमोघाह्वानम्,
किमतः परमपि विफलं रचयसि समयविलम्बाधानम् ?
यत् किल वन्धनमन्तर्वेष्टं छिन्नं निपततु पश्चात्,
गर्जन् शङ्खस्तव वारेऽस्मिन् भूयो भूयो ध्वनिमुपयायात् ।
गर्वं छित्त्वा निद्रां भित्त्वा तीव्रं चेतनमभितो भायात् ।

'तुमि यखन गान गाहिते बल'

आदिशसि त्वं यावद् गातुं तावन्मम हृत् समदमशेषम्,
नयनयुगं मे भवति जलार्द्रं त्वन्मुखदृश वीतनिमेषम् ।
यत् कटु कठिनं हृदि निचितं मे तदमृतमयसङ्गीताद्
द्रवतामिच्छति गन्तुम्,
निखिलं साधनमाराधनमपि खग इव वाञ्छति सुखमुत्पतितुम् ।
तृप्तस्त्वं मे गीतकरागेणायं स्वदते ते हि स्वदते,
एतद्गीतस्यैव सुशक्त्या वसामि जानेऽहमभिमुखे ते ।
न लभे मनसा यत्सन्धानं यामि तदङ्घ्रिं स्पृष्ट्वा गीत्या,
स्वरजावेशाद् विस्मृत्य स्वं प्रभुमाह्वयामि सुहृदित्युक्त्या ।

७९

'धाय येन मोर सकल भालवासा'

त्वां प्रति नाथ! त्वां प्रति मम हे त्वां प्रति धावतु सर्वः प्रणयः।
भवतः कर्णे भवतः कर्णे भवतः कर्णे भूतिमय!
स्थानं लभतां निःशेषो मम मानससुगभीराशाप्रचयः।
मम खलु चित्तं यत्र यदास्तां भवदाह्वानाद् भवतूद्बुद्धं,
या या बाधा लयमुपगच्छतु सा सा दैवात् सिद्धम्।
भवति प्रणयाद् भवति प्रणयाद् भवति प्रणयादिद्धम्।
बाह्यभैक्ष्यभृत-भिक्षापात्री वारेऽस्मिन् किल भवतु सुरिक्ता,
रहसि मदन्तःकरणक्षौणी भवतु विभो हे पूर्त्या युक्ता।
भवतो दानाद् भवतो दानाद् भवतो दानाद् दैन्यविमुक्ता,
आन्तरतर हे सखिवर! यत् किञ्चन हि सुन्दरम्,
जीवनेऽत्र सकलमेव रणत्वद्य शुभस्वरम्,
गीत्या तव गीत्या तव गीत्या तव नाथ! परम्।

'तारा दिनेर वेला ए'सेछिल'

ते दिवसे सम्मिलिता मदालये,
आहुरेकमावसेम पार्श्वमये !
अन्यदपि प्राहुरहो त्वदीयदेवतार्च्चने,
विदध्याम सहायतां वयं परां पुण्यभने ।
प्रसादरूपेण वयं समर्च्चनानन्तरतः,
यत् किञ्चन लब्धमहो तदेव सेवितास्महे ।
एवं लघुदीनोचितमलिनवेशमुपाश्रिताः,
उपागत्य ससङ्कोचमेककोणमधिष्ठिताः ।
दृष्टं निशि बलोद्धता विशन्ति मे सुरालये,
हरन्त्यमी पूजावलिमशुचिकरैर्द्द समये !

## ८१

'तोमार नामे बाटेर माझे'

नाम्ना तव तैर्भवने बलात् प्रगृह्यते करः,
पश्याम्यथ घट्टगतो नास्ति मदीय आतरः ।
ते त्वत्कर्मणश्छलाद् घ्नन्ति मे धनजीवने,
स्वल्पतरं यदस्ति मे तदपि हरन्ति हा पुरः ।
अहं पर्य्यचैषमद्य छद्मवेशिजनान् हि तान्,
तेऽपि पर्य्यचैषुरिमं मां किलैष न शक्त इति ।
गुप्तमूर्त्तिमतो जहुस्त्वपादयो दूरगताः,
पथ्यवरोधिनः स्थिता अद्य समुत्तोल्य शिरः ।

## ८२

'एइ ज्योत्स्ना-राते जागे आमार प्राण'

ज्योत्स्नामय-निशि किलात्र मदन्तरं सजागरम् ;
पार्श्वे तव भविता किमु मम स्थानमतः परम् ।
द्रष्टुमलं भविष्यामि विलक्षणं तद्वदनम्,
स्थास्यति हृत् समुत्सुकं निरन्तरं कृतेक्षणम्,
अश्रुचितं गीतं मम,
विहरिष्यति पुनः पुनः कृतचरणप्रवेष्टनम् ।
ससाहसं खलु तव पादमूलतः,
स्वमद्य नैवाकरवं ह्युपायनम् ।
निवर्त्त्येत यदि मदुपायनं त्वये-
त्यवस्थाप्य मुखमवनौ वसाम्यहम् ।
करं मम स्वयमुपगृह्य चेद् भवान्,
उपेत्य मां समभिवदेदुत्थितये,
तदा हि मे निरवधिचित्तदीनता,
अनेन हि क्षणेनैव वरिष्यते निवर्त्तनम् ।

'কথা ছিলো এক তরীতে কেবল তুমি আমি'

आसीद् वाचा सत्यङ्कारः केवलमेककनावा,
त्वश्चाहश्चोद्देश्यविहीनं प्लवमानौ यास्यावः,
केवलमेतौ प्लवमानौ यास्यावः।
ज्ञास्यति कोऽपि न भुवनत्रितये
तीर्थयात्रिकावावां,
क्व नु खलु देशे क्व नु खलु देशे
गच्छावः क्व नु नावा ?
विघटितकूले तस्मिन्नायततोयधिमध्यस्थाने,
गीतश्रवणं कारयिताहे तवैव रम्ये श्रवणे।
भृशमनियन्त्रितलहरीतुलितं
भाषाबन्धनरहितं,
रागमयं मम तत्सङ्गीतं
श्रोष्यसि नीरवहसितम्।
नाद्याप्युचितः किमजनि समय-
स्तस्य किमास्ते शिष्टम् ?
असकौ सन्ध्या सागरतीरे
वतरति विधिनिर्दिष्टम्।
क्षीणालोके पक्षोत्क्षेपं
सागरपारबिहङ्गाः,
निखिला एव स्वकुलायकुले
विहितावर्त्तनसङ्गाः।

कस्मिन् समये त्वमुपायास्यसि
घट्टे बन्धच्छेदकृते ?
अस्तोन्मुखरविचरमविभाव—
र्मार्गन्ताऽलक्ष्यं हि निशीथे ।

'आमार एकला घरेर आड़ाल भे'ङे विशाल भवे'

ममैकगेहव्यवधिं भित्त्वा

संसारे सुविशाले,

चित्तरथस्थो बहिरवतरितुं

शक्ष्यामि क नु काले ?

प्रबलप्रेम्णा निखिलजनान्तः,

सर्वविधौ स्यां सुपरिभ्रान्तः,

हट्टसरण्यां त्वयका सार्द्धं

मिलनं भविता काले।

चित्तरथस्थो बहिरवतरितुं

शक्ष्यामि क नु काले ?

आशाकाङ्क्षामयसुखदुःखे

निखिले तरसोत्पतितः,

वक्षसि तत्तल्लहरीपातं

धारयिताहे परितः।

कुशलाकुशलप्रहरणवेगात्

स्यां तव वक्षसि जागरितः।

विश्वजनानां कलरवमध्ये

वाणीं श्रोष्याम्यप्यभितः।

चित्तरथस्थो बहिरवतरितुं

शक्ष्यामि कदा व्याकुलितः ?

'एका आमि फिरबो ना आर एमन क'रे'

स्वेन हि मनसा कोणे कोणे

मोहावेशाद् विश्वे,

नैकक एवं व्यर्थभ्रमणं

पुनरहमेष करिष्ये ।

एकस्त्वां भुजबन्धनदाम्ना

बंधुं क्षुद्रीकृत्योद्यच्छन्,

निजमेव हि निजवन्धनदाम्ना

वध्नाम्याान्ध्यं विन्दन् ।

यावदुपेयां त्वामहमखिले

तावद् हृदि हृद्राजं लप्स्ये

चित्तमिदं मम वृन्तं केवल—

मस्योपरिगं विश्वं कमलं,

तदुपरिभागे मां परिदर्शय

पूर्णविकाशं लास्ये ।

'आमारे यदि जागा'ले आजि नाथ'

अद्य यदि जागरणमङ्ग मम साधितं

मास्तु तव मास्तु विमुखत्वं,

सकरुणं नयनमिह पात्यम् ।

घनविपिनशाखोपरि शुचिजलदवर्षणं,

सुविपुलालस्यमुपयाता,

सुप्तिरसभागिनी वार्षिकनिशीथिनी

सन्ततं वर्षपरिवीता ।

मास्तु तव मास्तु विमुखत्वं,

सकरुणं नयनमिह पात्यम् ।

विरामविरहितचपलाघाताद्

विनिद्रमन्तःकरणं,

सह वर्षाजलधारानिकरै-

र्गातुं वाञ्छति गानम् ।

हृदयं मम नयनाश्रुस्यन्दै

र्वहिरवतीर्णं तिमिरतले,

प्रसार्य्य करयुगमाकुलशक्तया

मृग्यति गगनं गाढमले ।

मास्तु तव मास्तु विमुखत्वं,

सकरुणं नयनमिह पात्यम् ।

## ८७

'छिन्न क'रे लओ हे मोरे आर विलम्ब नय'

विश्लेष्य त्वं मामधिकुरु हे
मास्तां परतः कालविलम्बः,
पश्चाद् धूलौ स्खलितः पतितः
स्यां वेति भवति भीत्यारम्भः।
कुसुममिदं तव मालामध्ये,
किं पदमाप्स्यति नो परिबुध्ये,
भाग्ये तस्य तथापि विराजतु
भवदाहतिपरिरम्भः।
कुरु विच्छिन्नं कुरु विच्छिन्नं
मास्त्वथ कालविलम्बः।
कदा नु दिवसो नङ्क्ष्यति सहसा
भवितारब्धं तिमिरम् ?
कदा च भवतः पूजावेला
गन्तालक्ष्यं दूरम् ?
यन्मितमिह रञ्जनमवतीर्णं,
गन्धसुधाभ्यां वक्षः पूर्णम्,
सति शुभसमये तव सेवायाम्
उपकरणं कुरु तत्त्वमरम्,
कुरु विच्छिन्नं कुरु विच्छिन्नं
कालविलम्बो मास्तु परम्।

## ८८

'चाइ गो आमि तोमारे चाइ'

इच्छामि त्वामिच्छामि त्वामिच्छाम्यहमधिगन्तुम्,
भूयान्मनसि सदावसरो मे तदिदं बचनं वक्तुम्।
यत् किञ्च परं वाञ्छन् मनसा
निशि दिवसे च चरामि,
मिथ्या तत् खलु निखिलं मिथ्या
त्वामहमयि वाञ्छामि।
रात्रिर्यद्वत् प्रच्छादयति
प्रार्थनमेवालोके,
तद्वन्मोहे सुमहति याचे
त्वामहमस्मिन् लोके।
शान्तिं वात्या यावत् प्रहरति,
तदापि सा हृदि शान्ति वाञ्छति,
तद्वत्त्वामभिहन्मि तथापि
त्वामिच्छाम्यहमेतुम्।

## ८९

'आमार ए प्रेम नय तो भीरु'

इदं मम प्रेम न वै भीरु न वा हीनबलम्,
किं तदिदं व्याकुलितं पातयितैवाश्रुजलम् ?
मन्दमधुरसुखसुषमे प्रेम कथं मज्जयतः सुप्त्यमृते,
मुदागमेन विह्वलम् त्वया समं जागरितुं तच्चतते ।
भीषणवेशधृग् यदा त्वं विदधासि नर्त्तनं,
प्रकाशते तीव्रतालकृताहति प्रघट्टनम् ।
प्रेम परित्रासवशादतित्वरं दूरपथे,
त्रपावशात् संशयविह्वलीभूय पलायते ।
तत् प्रचण्डमनोहरं प्रेम किलास्कन्दतु मे,
क्षुद्रतमैषणास्वर्गमदो नयतु रसातलम् ।

## ९०

'आरो आघात सइबे आमार'

इतोऽपि तीव्राघातः सह्यो
भविता मम खलु सह्यो भविता,
तीक्ष्णतरस्वरमितोऽपि भव खलु
जीवनतन्त्र्यां झङ्कृतिदाता।
यं रागं जागरयसि ममान्तरे,
स नहि गतश्चरमतानयोगमरे,
निष्ठुरतममूर्च्छनया तस्मिन् खलु गाने,
सञ्चारय सञ्चारय मूर्त्तिं शुभताने।
स्पृशतु नैव सुकोमला,
तव करुणा हि केवला,
मृदुस्वरक्रीडनया न जीवनं व्यर्थय हे।
ज्वलतु सर्वहुताशनः,
स्वनतु सर्वसमीरणः,
जागरयन्नखिलनभः पूर्णतां प्रसारय हे।

'एइ क'रेछो भालो निठुर, एइ क'रेछो भालो'

सुष्ठु तावदिदं कृतं सुष्ठु तावदिदं कृतं
निष्ठुर हे

एवमेव हृदये मम तीव्रतमं हुताशनं
ज्वालय हे

एष मदीयधूपको ह्यदह्यमानविग्रहः,
न लेशमात्रसौरभं समन्ततः किरत्यहो।
इयं किलाप्रदीपिता मम प्रदीपवर्त्तिका,
ददाति नालोकलवं समन्ततः कञ्चन हे।
यदा तावदचेतनं तिष्ठति मे चित्तमिदं,
तदा स आघातविधिस्तव स्पर्शतया
पुरस्कारपदम्।

अपान्धकारमोहतो न चक्षुषा
त्वां परिपश्यामि विभो।
हुताशनीकुरु निखिलं ममासितं
कुलिशहुताशनेन भोः।

## ९२

'देब्ता जे'ने दूरे रइ दाँड़ा'ये'

दैवतमिति विदितवता दूरपदे मयास्यते,
स्वजन इति प्रजानता समादरो न क्रियते।
जनक इति ज्ञानवता पदे नतिर्विधीयते
बन्धुरित्यवेत्य न ते करद्वयं सन्धृयते।
स्वयं भवानतिसहजप्रेमसमाश्लिष्टतया,
मदीयतामाश्रितवानवातरद् यत्र धिया,
तत्र सुखं वक्षसि मे त्वां समुपादाय परं,
वृणोम्यहं नैव हन्त सहचर इति धृतादरम्।
अत्र भवे भ्रातृषु या भ्रातृता तवैव हि सा,
तथापि तान् न लोकये प्रभो! प्रेमपूर्णदृशा।
विभज्य मे निजं धनं समं भ्रातृगणेषु भोः!
कथं त्वदीयमुष्टिकां न पूरयामि हे विभो!
समस्तसौख्यदुःखयोरतिद्रुतं समागतः,
न वा तवैव सम्मुखे विभो! भवामि संस्थितः।
समर्प्य चान्तरं कृतौ परिश्रान्तिविवर्जितः,
भावमये महार्णवे भवाम्यहो नोत्पतितः।

## ९३

'तुमि ये काज करछो, आमाय से काजे कि लागाबे ना'

यत् करोति कर्म भवान्

तत्र न किं मामुपयोजयिष्यति ?

कर्मदिने किं नु भवान्

स्वहस्तेन मां न जागरयिष्यति ?

हिताहितानुषञ्जने,

नत्युन्नतिसम्पतने;

विश्वनिकेतनायने,

भञ्जनके संघटने

त्वदीयपार्श्वतः स्थिते

पदे किल स्थानजुषो जनस्य मे,

जगत्पते ! त्वया समं

भाग्यवशात् परिचितिरस्तु सङ्गमे,

यत्र पदे गतागते

नैव नृणां सम्भवतः कदाचन,

व्यधायि कल्पना मया

तथाविधे जनरहिते ह्यनातपे,

प्रदोषकाल आगते

त्वया समं परिचितिरुद्भवेन्मम ।

तमोमये ह्येककयोः

स सङ्गमः स्वाप्निकसङ्गतेः समः ।

क्रयश्च विक्रयश्चेति

यत्र पदे प्राणभृतां प्रवर्त्तते,

तत्र किलामन्त्रणकं

साधय मे नाथ ! भवद्वणिक्पथे ।

१४

'विश्वसाथे योगे येथाय विहार'

जगता युक्तो विहरसि यत्र

त्वयका योगस्तत्र ममापि,

न वनोद्देशे नो वा विजने,

नापि मदीयस्वान्तःकरणे,

प्रियतम ! यस्मिन् सर्वजनानामात्मजनस्त्वं तत्र ममापि।

यस्मिन् बाहुं प्रसृतं कुरुषे

सर्वाभिमुखं प्रेम्णा,

तत्रैवाद्धा मय्यपि भविता

जागरितेन प्रेम्णा।

प्रेम न गुप्तं तिष्ठति भवने,

भवति विकीर्णं द्युतिवद् भुवने,

सर्वस्य त्वं मोदद्रविणं तत्त्वं प्रियतम ! भासि ममापि।

## ९५

'डाको डाको डाको आमारे'

आमन्त्रय मामामन्त्रय मामामन्त्रय तव तिमिरे,
स्निग्धच्छविचितशीतलतामयपावनतमसुगभीरे ।
तुच्छदिनानां क्लान्तिग्लानी जीवनमद्धा धूलौ क्षिपतः,
वाक्यान्तरयोरमितविकारैरनिशं यत्सञ्चारो जनितः ।
मुक्तं कुरु हे मुक्तं कुरु मां नीरवनिविडोदारे,
निरवधितावकतिमिरे ।
नीरवरात्रौ विघटितवाचो व्रजतु बहिर्मे बहिराधारम् ,
आन्तरिकतमः साक्षात्कारं वितरतु च ममाखण्डाकारम्

'येथाय तोमार लुट ह'तेछे भुवने'

यत्र तव लुण्ठनं भवति भुवनान्तरे,
तत्र मम मानसं कथमिव हि गन्ता ?
कनककलसेन वै रविरपि च तारकाः,
रुचिनिचयसञ्चयैकान्ताः ।
अनन्तकमन्तरं नभसि परिकीर्य्यते,
तत्र मे मानसं कथमिव हि गन्ता ?
यत्र दानासनं त्वमसि समधिष्ठित—
स्तत्र मे मानसं कथमिव हि गन्ता ?
त्वं नूतनरसरचिताकारं,
प्रसृतं कुरुषे त्वं प्रतिवारं,
तत्र नामन्त्रणा मम निखिलजीवने,
भाविनी किमु हृदयकान्ता,
तत्र मे मानसं कथमिव हि गन्ता ?

९७

'फुलेर मतन आपनि फुटाओ गान'

कुसुमोच्चयमिव नयसि विकाशं
त्वं स्वयमिह खलु गानं,
हे मदधीश्वर ! तदिदं तावत्
त्वदुपानीतं दानम् ।
अयि ! तत् कुसुमं दृष्ट्वानन्दे
प्लवते मामकचित्तं,
ममेति बुद्धया त्वामुपगच्छा—
म्युपहर्त्तुं तद् वित्तम्,
स्नेहाद् विहसन् स्वकरेण त्वं
नाथ ! कुरुष्वादानं,
करुणां कृत्वा रक्ष किल त्वं
मम सञ्चितमभिमानम् ।
अथ यदि पूजासमयस्यान्ते
गानमिदं सत् स्खलितं,
क्षितिधूलौ स्यान्मिलितम्,
न तदा किमपि ममापचितम् ।
तव करकोषे द्रविणमविरतं,
कियदिव परितो भवति विलुठितं,
कियदपि भवति स्खलितम्,
तत् सर्वं मम जीवनचित्रे क्षणकालाय स्फुटितम् ।
सुचिरायाद्धा तत् किल कुरुते जीवनमभितः फलितम् ।

## ९८

'मुख फिरा'ये रबो तोमार पाने'

त्वदभिमुखे परावर्त्य मुखं स्थितिः करिष्यते,
एतं मम मनोरथं सफलं कुरु चित्तपथे ।
स्थितिक्रिया काम्या मम केवला,
समुदीक्षणसहिता हि स्थितिक्रिया केवला,
स्थापना ममान्तरस्य पृथक्‌तया केवला,
व्यथासु सर्वासु तथा समुद्‌गतेऽखिलेप्सिते,
निखिलदिवसकरणोचितकृत्यचये सुविस्तृते ।
बहुदिङ्‌मुखमभिसरन्ति बहुला मम वासनाः,
तत्रैकां सफलां कुरु हृदये सदयात्मना ।
सैषा किल निशागमादनन्तरं निशागमे,
एककस्य वेदनया जागरिता विभातु मे ।
एकमोदगीतकेन तथैकसूत्रयोजनात्,
दिनात् परं दिनं विभो ! विश्वपते ! योजयतात् ।

'आबार ए'सेछे आषाढ़ आकाश छेये'

व्याप्याकाशं पुनरागत आषाढ़ः,

वाहनभूतं कृत्वा मरुतं समेति वर्षणसौरभभारः,

अद्य पुरातनमेतन्मामकहृदयं

दृष्ट्वा नूतनगाढतमाम्बुदनिचयं,

उल्लासेन विलोलं समजनि पुनरिव संज्ञाधारः,

व्याप्याकाशं पुनरागत आषाढ़ः।

अधि-सुप्रसृतक्षेत्रं,

सविरामं क्षणमात्रं,

वर्षाच्छाया परितो निपतत्यधितृणसन्ततिपत्रम्।

आगत आगत इत्यभिधत्ते हृदयं,

आगत आगत इति गीतं यात्युदयम्,

आयान्नयने हृदि च द्रुतसञ्चारः,

व्याप्याकाशं पुनरागत आषाढः।

'आज बरषार रूप हेरि मानवेर माझे'

सम्प्रति वर्षारूपं वीक्षे निखिले मानववलये,
स चलति गर्जन् स चलति सुनिबिडसज्जावानिह समये।
तस्य हि हृदये नृत्यारम्भं सम्प्रति कुरुते भीमा,
सन्धावन्ती लुम्पन्त्येषा प्रचलति तावत् सीमाः।
वक्षसि वक्षसि सङ्गतयोः,
अन्योन्यं किल नीरदयोः,
किंविधताडनयेह च वज्रं ध्वनिमातनुते समये,
वर्षारूपं समवालोके निखिले मानववलये।
जीमूता बहुपुञ्जविभक्ता दूराद् दूरे वृणते चारं,
कथमिति विदधति नैव विचारम्।
किमपि न तत्त्वं जानन्त्येते, क्व नु खलु सुविशालाद्रितले,
परिणतिमाप्ते श्रावणमासे गलिता निपतिष्यन्ति जले?
नहि जानन्त्यपि तेषां सुनिविडभीषणविपुलारम्भे,
कीदृशभीषणजीवनमरणे लसतः संश्रितदम्भे।
वर्षारूपं समवालोके निखिले मनुजकदम्बे।
ईशानाधिष्ठितदिग्भागे यासौ वात्यावाणी,
गुरुगुरुनादैः किं ननु कुरुते निभृतं कर्णाकर्णि।
ननु सुविशाले दिगन्तराले किं भवितव्यं निहितं,
स्तब्धे तिमिरे परितः प्रवहति भाषाहीनव्यथितम्।
निविडच्छायातलगतदेशे
प्रचितं कल्पनमसितं,
आसन्नाय हि कस्मै विधये
घनतां गन्तुं प्रोल्लसितम्।
वर्षारूपं लोकसमाजे वीक्षे सुतरामुच्छ्वसितम्।

## १०१

'हे मोर देवता भरिया ए देह प्राण'

देहस्वान्तापूरं दैवत !

किममृतमिच्छसि पातुं,

किन्तु ममाक्ष्णा तव विश्वश्रिय-

मिच्छसि सुकवे ! द्रष्टुम् ।

निःशब्दो मम मुग्धश्रुत्या

वाञ्छसि किमु निजगानं श्रोतुम्,

देहस्वान्तापूरं दैवत !

किममृतमिच्छसि पातुम् ।

चित्ते मम तव सृष्टिरपूर्वा

रचयति वाणीं काञ्चिदपूर्वां,

नाथ ! तया त्वत्प्रीतिर्मिलिता

जागरयति मम गीतिं सर्वाम् ।

मधुररसेनात्मानं पश्यसि

कृत्वा मयि निजदानं,

देहस्वान्तापूरं दैवत !

वाञ्छसि किममृतपानम् ?

१०२

'एइ मोर साध येन ए जीवन माझे,'

महागीतिकायां तवानन्दधारा
प्रभो ! जीवनेऽस्मिन् ध्वनत्वेष कामः ।
नभस्ते तथालोकधारात्युदारा
लघुद्वारमालोक्य मा गान्निवृत्तिम् ।
ऋतूनां हि षट्कं समायातु नृत्य-
न्नवीनेन वेशेन नित्यं मदन्तः ।
तवानन्दधारा ममाङ्गे तथान्तः
कयाचिन्न वृत्या समायातु बाधाम् ।
तवानन्दधारा ममात्युग्रदुःखे
प्रदीप्तास्तु पुण्यप्रभातुल्यरूपा ।
तवानन्दधारा समुच्छिद्य दैन्यं
विधौ मेऽखिले विस्फुरन्ती स्फुटास्ताम् ।

'एकला आमि बाहिर ह'लाम तोमार अभिसारे'

एकोऽहं बहिरभवं तवाभिसारी,
निःशब्दे तमसि मया प्रयाति को वा ?
ईहे हापयितुमिमं वहुप्रकारैः,
पन्थानं समनुसरंश्चलामि वक्रम् ।
किञ्चिद् वा समपसरामि तद्विदूरे,
मन्ये चापदपगता पुनस्तमीक्षे ।
चाञ्चल्यं सुविषममस्य सप्रकाशं,
भूकम्पं किल घटयन्नसौ प्रयाति ।
स्वां वार्त्तां सकलकथास्वसौ विवक्षुः,
साऽहन्ता मम हि विभो ! त्रपा न तस्याः ।
श्लाघ्यास्ते, तदनुगतस्त्रपास्तदैन्यो,
द्वारं ते कथमिव हन्त सम्प्रपत्स्ये ?

'आमि चेये आछि तोमादेर सबापाने'

युष्मान् किल सर्वान् प्रति बद्धदृष्टिरस्मि हे !
मह्यं स्थितिपदं वितर सर्वमनुजसदसि हे।
धूलिमये धरातले निम्नेऽखिलनिम्ने
यत्रासनशुल्कं न हि देयम्,
रेखया न कृतविभागमस्ति किमपि मेयम्,
न मानापमानभिदा यत्र प्रतिभाति हे,
स्थानं मे वितर तत्र सर्वमनुजसदसि हे ।
यत्र कापि न वर्त्तते बहिरावृतिरायता,
यत्र नग्नपरिचितिरप्यात्मनः प्रकाशिता,
न हि मदीयमस्ति किमपि वस्तु किलैकान्ततः,
सत्यमिदं नावृणुते ह्यात्मप्रकृतिं यतः ।
स्थितस्तत्र ममायतं दैन्यं लज्जयोज्झितं,
तस्य परमदानवशात् प्रपूरयिष्यामि हे ।
मह्यं स्थितिपदं देहि सर्वमनुजसदसि हे ।

१०५

'आर आमाय आमि निजेर शिरे बइब ना'

नो वहेयमतः परं स्वशीर्षेण निजं हि माम्।
अथो निजद्वारि न चावलम्बेय दीनविधाम्।
विनिक्षिप्य भारमिमं शिवप्रदे भवत्पदे,
सम्मिलितोऽवहेलया भविष्यामि बहिः पदे।
न वृत्तमस्य किञ्चन ग्रहीष्यामि लोलतया,
न काञ्चिदस्य वा कथां वदिष्यामि मुग्धतया।
स्वमूर्ध्नि भार आत्मनो
नैव च धार्य्यते मया।
यदेव वस्तु संस्पृशत्यहो मदीयवासना,
तदालोकनिवर्त्तकं तदेव हा क्षणात्मना।
तस्य तावदरे तेन करद्वयेनाशुचिना,
यदेवोपहृतं कृतं नेच्छा मम तस्य कृते।
तव प्रेमवशेन यन्नो रणितं जनिष्यते,
अतः परं तद्धि वस्तु नैव मया सहिष्यते,
स्वशीर्षेण नोद्वहनं स्वस्य मया करिष्यते।

१०६

'हे मोर चित्त, पुण्यतीर्थे जागो रे धीरे'

हे मम मानस ! पावनतीर्थे
मन्दं जागृहि रे,
एतद्भारतमहिमसमन्वित-
मानवसागरतीरे ।
अत्र स्थित्वा प्रसार्य्य बाहू
नरदैवतमभिवन्दे,
समहाच्छन्दः परमानन्दं
तद्वन्दनमनुविन्दे ।
ध्यानस्तिमितं भूधरजालं,
प्रान्तरमात्तनदीजपमालं,
अत्र विलोकय पावनरूपां नित्यं धरणीं रे,
एतद्भारतमहिमसमन्वित-मानवसागरतीरे ।
वेत्ति न कश्चित् कस्याह्वानात्
कति किल मानुषधाराः,
दुर्दमवेगाः कुत आयाता
जलधौ लुप्ताकाराः ।
अत्र किलार्य्या अत्रानार्य्या
अत्र द्राविडचीनाः,
अपि शकहूना इह पाठाना
इहैव मुगला लीनाः ।
पश्चिमदिगद्य विवृतद्वारा,
सर्वे तत आहृतोपहाराः,
दातारश्चाहर्त्तारः स्युर्मेलयितारो मिलिताः ।

प्रस्थानं वै नैव विधास्यति विमुखः कश्चन रे,
एतद्भारतमहिमसमन्वितमानवसागरतीरे ।
समभिवहन्तो रणविधिधारां
गायन्तो जयगानं,
भित्त्वा मरुपथलघुगुरुपर्वत-
मुन्मादोद्यद्ध्वानम्,
ये समुपेतास्ते समवेता
राजन्तेऽस्मन्मध्ये,
नहि नहि कश्चन दूरे,
मामकशोणितपूरे,
तस्य विचित्रस्वरसम्भारो ध्वनितो भवति हि मेध्ये।
रुद्रविपञ्चि ! ध्वनिता भव
हे ध्वनिता,
साम्प्रतमपि ये कृत्वावज्ञां
दूरे मनुजा उषिताः ।
बन्धं छित्त्वा तेऽपि समेताः
परितः स्थास्यन्त्यपरे,
एतद्भारतमहिमसमन्वितमानवसागरतीरे ।
अत्र कदाचिद् विरतिविहीनः
सुमहानोमिति नादः,
एकमन्त्रेणान्तरतन्त्रे
प्रोल्लसिती निर्बाधः ।
तपसैकाग्नौ हुत्वा बहुलं
समपाकृत्य विभेदं,
एकमपूर्वं हृदयमुदारं
मनुजोऽजनयदखेदम् ।

अद्य तदाराधनतत्साधन-

मखशालानां विवृतं द्वारं,

अत्र समेषां मिलनं भाव्यं

नियतं व्यानतशीर्षमुदारम्।

एतद्भारतमहिमसमन्वितमानवसागरतीरे बाढम्।

तत्र मखाग्नौ पश्याद्य लसति

दुःखारक्तज्वाला,

सा सोढव्या, मर्मणि दाहं

स्रष्टुं सा विधिलीला।

रे मम मानस! दुःखमिदं वह

शृणु खल्वेकाह्वानं,

यावल्लज्जा यावद्भीतीर्जय जय

जह्यपमानम्।

दुःसहपीडानिकरसमाप्त्या

भविता हृदयाध्मानम्।

शाम्यति रजनी जहाति जननी

सुप्तिं विपुले नीडे,

एतद्भारतमहिमसमन्वितमानवसागरतीरे।

एत किलार्य्या! एतानार्य्याः!

हिन्दुमुसल्मान्सङ्घाः!

एह्येहि त्वं साम्प्रतमाङ्गल!

खृष्टोचितनिजभङ्ग्या।

एहि ब्राह्मण! सम्मार्ज्य मनः

प्रगृहाणाखिलहस्तं,

एह्येहि पतित ! दूरं नय चित-

मपमानं हि समस्तम् ।

अभिषेकार्थं मातुस्त्वरितं

भवत भवत सम्मिलिता रे !

क्षेमघटो नापूर्य्यत सर्व-

स्पर्शपवित्रिततीर्थजलं रे !

अद्य हि भारतमहिमसमन्वितमानवसागरतीरे ।

'येथाय थाके सबार अधम दीनेर ह'ते दीन'

दीनेभ्यो दीनतमाः सर्वतो निकृष्टतमाः
वसन्ति यत्र तत्र वै सर्वजनस्य पृष्ठतः,
सर्वजनस्य निम्नतः सर्वशून्यजनान्तरे
त्वदीयपादपङ्कजं प्रभो ! सदा विराजते ।
त्वां नमामि यदा तदा क्वापि नतिर्निबर्तते ।
यस्मिन्नपमानतले त्वत्पदमवतरत्यहो !
तत्र सर्वपृष्ठपदे सर्वजनस्य निम्नतः,
सर्वरिक्तजनान्तरे नतिर्न मेऽवरोहति ।
सर्वजनस्य पृष्ठतः सर्वजनस्य निम्नतः
सर्वरिक्तजनान्तरे यत्र सञ्चरसि प्रभो !
विभूषणेन वर्जितो दीनदरिद्रवेशधृक्,
न विन्दते ह्यहङ्कृतिस्तदीयतत्त्वनिर्णयम् ।
धनेन मानेन तथा यत्र विभाति पूर्णता,
तत्र हि सम्भावयामि भवत्सङ्गतिमङ्गलम् ।
स्थितः सङ्गितया यत्र सङ्गिहीनगृहे,
तत्र न मे भवति हृदोऽवरोहणम्,
सर्वजनस्य पृष्ठतः सर्वजनस्य निम्नतः
अति क्षुद्रत तयान्विते सर्वशून्यजनान्तरे ।

'हे मार दुर्भागा देश, यादेर क'रेछो अपमान'

हे मम दुर्भग देश ! व्यदधा
येषां चिरमपमानम् ,
अपमानेन त्वयापि लभ्यं रूपं तैः सुसमानम् ।
मनुजोचिताधिकारात्,
वञ्चितवान् यानारात्,
समुपेक्ष्याभिमुखे स्थितिमेभ्यो नादाः क्रोडे स्थानम् ।
अपमानेन त्वयापि लभ्यं रूपं तैः सुसमानम् ।
मनुजविशेषस्पर्शं दूरे
प्रतिरुध्य प्रतिवारं,
मानुषमानसदैवतमनयस्त्वमयमवज्ञाभारम् ।
धातू रुद्रक्रोधावेशात्,
दुर्भिक्षस्य द्वायुपवेशात्,
विभज्य सर्वैरुपयोक्तव्यं नियतमिहान्नं पानम् ।
अपमानेन त्वयापि लभ्यं रूपं तैः सुसमानम् ।
त्वं तव पीठाद् यत्र किलैतानुत्सारितवान् पूर्वं,
शक्तिवितानं तत्र सहेलं निर्वासितवान् सर्वम्,
चरणेनामी दलिताः,
सर्पन्त्यवनौ पतिताः,
अवतरणं कुरु तत्र हि निम्ने नो चेन्न परित्राणम् ।
अपमानेन त्वयाद्य लभ्यं रूपं तैः सुसमानम् ।
यां जनतां त्वं निम्ने कुरुषे सा त्वां यन्ताधस्तात्,
यां वा संस्थापितवान् पृष्ठे कर्षति सा त्वां पश्चात्,

अज्ञानात्मकसन्तमसेना-

न्तरितां यां त्वं हे कुरुषे,

तव मङ्गलमावृत्य विधत्ते

सा घोरव्यवधानम् ।

अपमानेन प्राप्यं रूपं त्वयका तत्सुसमानम् ।

बहुशतवर्षान् यावच्छीर्षे स्थितमपमानाधानं,

तथापि नो नरनारायणाय वहसि नमःसन्धानम् ।

तथापि नेत्रं नमयन्,

किं नहि पश्यसि मतिमन् !

हीनानां पतितानां भगवानकृत रजस्यवतरणम् ।

अपमानेन प्राप्यं तस्मिन् रूपं तत्सुसमानम् ।

पश्यसि न त्वं मृत्योर्दूतः स्थितिमानभवद्द्वारे,

अङ्कितमकरोदभिशापन्ते जातिकृताहङ्कारे,

त्वं यदि सर्वान् नाकारयसे,

सम्प्रत्यपि यदि दूरं श्रयसे,

अभिमानेनावेष्ट्य समन्ताद् रक्षसि बद्ध्वात्मानं,

तर्हि मृतौ चितिभूत्या लभ्यं रूपं सर्वसमानम् ।

१०९

'छाड़िस् ने ध'रे थाक् ऍटे ओरे हबे तोर जय'

मा परिहर दृढं धरन्नासूत्र भजेस्त्वं विजयं,
व्यपैतीव तिमिरराशिरनन्तरं नास्ति भयम्।
पूर्वदिशो भाले,
घनवनान्तराले,
पश्य शुक्रतारासौ समुपागमदिहोदयं,
अनन्तरं नास्ति रे भयम्।
अनाश्वास-संशयौ तथालसता,
आत्मगोचराविश्वस्तता तथा,
एते निशि केवलं प्रभावमयाः,
न ते प्रभातोपगमे साभ्युदयाः।
द्रवन्नेहि बहिरुपैहि शीघ्रमरे !
ऊर्ध्वशिराः समुन्मील्य दृशौ पश्य पश्य च रे।
नभस्तलं भवति सितप्रभामयं.
अतः परं नैव विराजते भयम्।

'आछे आमार हृदय आछे भ'रे'

अस्ति पूर्णमस्ति परं मम हृदयम्,
त्वं सम्प्रति साधय हे स्वरुचिसमं कर्मचयम् ।
एवमेव यद्यसि त्वमधिहृदयं,
हर हे मम बहिःपदादखिलमेव वस्तुचयम् ।
यत्र सर्वमनोरथः समाप्तिमध्याश्रयते,
तत्र ममान्तःकरणं यदि त्वया प्रपूर्य्यते,
ततः परं धन्वपथे खरतरभास्करातपः,
विजृम्भते यदि सुतरां विजृम्भताम्, किन्तु भयम् ?
बहुच्छलेनैतदहो ! क्रीडनमादधासि यत्,
मदन्तरप्रीतिकरं निरन्तरं परं हि तत् ।
एकदिशि प्लावयसि प्रस्र् तचक्षुःसलिलैः,
अन्यदिशि द्योतयसे हास्यलास्यमास्यमयम् ।
भावयामि यदाखिलं नयामि किं परिक्षयं,
गभीरभावेन लभे तमाधाय तद्विचयम् ।
निजाङ्कतः क्षिपसि यदा हि दूरतः,
पुनस्तदोरसि वृणुषे समुद्दधत् ।

## १११

'गर्व क'रे निइने ओ नाम, जानो अन्तर्यामी'

अन्तर्यामिन्! वेत्सि न नामादस्ते विन्दे कृत्वा गर्वं।
मम वदने किमु परिपूतं तव सदृशं नामापूर्वम्।
यावत् सर्वे समुपहसन्ति स्वान्ते तावत् कुर्वे,
तव नामपदं भवति ध्वनितं किन्तु मदाननगर्भे।
अस्तु ज्ञातमिदं निःशेषं त्यक्तोऽस्म्यहमतिदूरे,
नामगानमयकैतववेशेनाहं वा परिचयमादध्यां,
इति भावनया जातत्रपया गतिमेमि विषाविद्धाम्।
मिथ्याहङ्कृतिदोषात् कृपया जीवय तावन्मां,
तत्पदमध्यारोपय हे मां योग्यो यस्य स्याम्।
मामपसार्य निरीक्षणदोषादन्येषां सकलानां,
मयि करुणामय! नतमक्षियुगं वितर वितन्वन् करुणाम्।
मम खलु पूजा करुणावाप्त्यै क्वापि न साश्वतु मानम्।
नित्यं नूतनदोषविताने धूलौ गृह्णन् स्थानं,
त्वामहमामन्त्रयामि कामं भगवन्! कालं सर्वम्।

११२

'के बले सब फे'ले यावि मरण हाते ध'रबे यबे'

को वक्ति सर्वं परिहाय यास्यसि,
करे यदा त्वां मरणं ग्रहीष्यति ।
आसादितं यत् त्वयका हि जीवता,
तत् सर्वमासाद्यमसून् बिमुञ्चता ।

एतद्भाण्डागारमागत्य पूर्णं,
यास्यस्यन्ते किं त्वमेकान्तरिक्तः ।
आस्ते यत्ते संग्रहस्योपयुक्तं,
तत् सर्वं भोः सुष्ठुरीत्या गृहाण ।

निरवधि सञ्चितपूर्वो यो मलभारस्त्वया भूयान् ।
मरणे तदखिलहाने तव सम्यक् स्यात् परित्राणम् ।

अत्र पृथिव्यां मिलनमभून्मे
वेशो ह्यस्यां विरचयितव्यः ।
तस्मिन् मृत्यूत्तरपारमहे
सुखमित्वा नृपवेशं चल हे ।

## ११३

'नदीपारेर एइ आषाढ़ेर प्रभातखानि'

आषाढीयं तटिनीतटगतमेतच्चारु विभातं,
स्वीये मर्मणि वृणु रे मानस ! वृणु रे कृष्टवानीतम्।
श्यामलकान्त्या हेमरुचा सह कीर्णं यदिदं ह्यमृतं,
विहितोद्बुद्धा गभीरवाणी विष्णुपदे च प्रचितम्।
स्वीये मर्मणि वृणु रे मानस ! वृणु रे कृष्टवानीतम्।
एवं पथि सञ्चलनदशायां संसृतितटिनीकूले,
उभयस्मिन् यत् कुसुमं कसितं तत्सर्वं चिनु काले,
चिति ते तदखिलमुदितं, प्रस्यूतं कुरु नियतं,
प्रकटितयत्नं प्रतिदिनमाप्तं मत्वा भाग्याकलितं,
स्वीये मर्मणि वृणु रे मानस ! वृणु रे कृष्टवानीतम्।

११४

'मरण ये दिन दिनेर शेषे आसबे तोमार दुयारे'

दिवससमाप्तौ यावन्मरणं समुपैष्यति ते द्वारं,
तावत्तस्मै किं द्रविणं त्वं दास्यसि किलोपहारम् ?
उपनेष्यामि हि तूर्णं,
मम जीवनमतिपूर्णं,
विसर्जयिष्ये किञ्चिददत्त्वा नहि तद्रिक्तं दूरे,
मरणं यावत् समुपागन्ता मदीयगेहद्वारे ।
शारदरजनी माधवरजनी कियती समुपायाता,
कियती संध्या प्रभातवेला कियती चापि समेता ।
जीवनपात्रे कति रसवर्षं विदधति चित्राकारम्,
कतिभिः कुसुमैः कतिभिश्च फलैर्मामिकमानसपूरं,
सुखदुःखमयालोकतमिस्रस्पर्शोल्लसदुपचारम्
यत् किञ्चन मम सञ्चितवित्तं तावद्दिनविहितायोजनकं,
चरमदिने तत्सर्वं दास्ये तस्मै किलोपहारम्,
मरणं यावत् समुपागन्ता मदीयसदनद्वारम् ।

১১৫

'দয়া ক'রে ইচ্ছা ক'রে আপনি ছোটো হ'য়ে'

करुणां कुर्वन्निच्छापूर्वं स्वयमासाद्य लघुत्वं,
अत्र क्षुद्रे मदीयसदने नाथ ! समायासि त्वम् ।
स्थलजलयोस्त्वं विविधाकारं धृत्वा दत्से स्वाप्तिम्,
अस्मात्तव माधुर्यामृतमयि ! जनयति ममाक्षितृप्तिम् ।
बन्धुर्जनको जननी भूत्वा लघुतां श्रित्वान्तः स्वयमेषि,
अहमपि किं वा स्वयमाधास्ये लघुमखिलेशं नित्यं,
ज्ञेयस्त्वञ्च ज्ञापयितासे क्षुद्रपरिचयेन त्वम् ।

## ११६

'ओगो आमार एइ जीवनेर शेष परिपूर्णता"

मरण ! ममैतज्जीवनपूर्ते ! चरमे !
अयि ? मम मरण त्वं वद ? वचनं किल मे ।
भवदर्थं मम जीवनमखिलं,
जागरितोऽस्मि प्रतिदिनमचलम्,
सुखदुःखार्त्तिं श्रित्वा भ्रमामि भवदर्थं प्रतियामे,
मरण ! ममाहो मरण ! व्याहर वचनं किञ्चन किल मे।
यत् समवापं यादृगभूवं ये केचन मम कामाः,
सर्वमजानंस्त्वामभि धावति मम निःशेषः प्रेमा ।
भविता मिलनं भवता सार्द्धं ह्येकशुभमयदृष्ट्या,
जीवनवधूश्च भविता मे तव नित्यानुगतिविशिष्टा !
मरण ! ममाहो मरण ! त्वं मे कथय कथां सन्तुष्ट्या ।
वरणस्रङ् मम मानसमध्ये सुष्ठु ग्रथिता राजति हे ।
कदा नु नीरवहसितमुखं त्वं वरवेशेनायास्यसि हे ।
न गृहं मम तद्दिवसे स्थाता,
स्वपरविचारो दूरं याता,
विजनरजन्यां सार्द्धं पत्या साध्वीमिलनं यास्यसि हे ।
मरण ! ममाहो मरण ! त्वं मे कथय कथां सन्तुष्ट्या हे !

## ११७

'यात्री आमि ओरे'

यात्री तावदहं रे।

धृत्वा कोऽपि च सम्प्रति रोद्धुं कथमपि नालं भविता रे।
दुःखसुखाहितबन्धनमखिलं सुतरां मिथ्या नित्यं,
सुघटितमेतद् भवनं पश्चात् क नु खलु लब्धा सत्त्वम्।
विषयकभारोऽधो मां कर्षति स च्छिन्नः स्यात् कीर्णो रे।

यात्री तावदहं रे,
सरणौ गच्छन् मानसपूरं कुर्वे गानमहं रे।
देहे दुर्गे सर्वं द्वारं मुक्तं
वाञ्छामयबन्धनमपि भविता कृत्तम्,
सर्वहिताहितमुत्तीर्याहं गच्छेयं परपारे,
अस्मिन् लोके लोकान्तरे च निरतः स्यां सञ्चारे।

यात्री तावदहं रे,
यः कश्चन मम भारः सर्वः स गमिष्यति रे दूरे।
दूरं प्रति मामामन्त्रयति हि गगनं,
अविदित-भाषाविरहितगीतककरणम्,
सुगभीरस्वरमित्थं,
कस्य नु मुरली कर्षति मम हृत् प्रातः सायं नित्यम्?

यात्री तावदहं रे,
कीदृशकल्ये बहिरवतीर्णस्तत्र न मेऽस्त्यवधानं,
न तदा क्वचिदपि कश्चन विहगः कृतवान् प्रातर्गानम्।
नाहं जाने रजनी शिष्टा तावत् किम्परिमाणम्।
विगतनिमेषं केवलमेकं नयनमवहितं तिमिरे।

यात्री तावदहं रे,
कुत्र दिनान्ते कस्मिन् गेहे भवेयमहमुपगन्ता रे ?
का ननु तारा रहयति तिमिरं तस्मिन् समधिष्ठाने ?
क्रन्दति पवनः कस्य नु कुसुमस्य प्रथमाने घ्राणे ?
स्निग्धविलोचनयुगलेनाहो को वा तत्र स्थाने,
सुचिरात् सततं किल मम हेतोरीक्षणकृत्यरतो रे ?

'उड़िये ध्वजा अभ्रभेदी रथे'

समुत्पाल्य केतनं हि गगनभेदि रथे,
सोऽसौ प्रतिभाति किलामुत्र वहिष्पथे।
उपेहि रे द्रुतं रज्जुकृष्टिकृते,
गृहाभ्यन्तरे वससि क्व नु निभृते ?
गभीरसंमर्द्दमभिप्रविश्य रे
कथश्चन स्थानलवं विधेहि तत्रात्मकृते।
क्व ते को नु कृत्यचयो गृहस्य वावशिष्यते ?
तत्समुदायविस्मृतिस्तवाधुना हि युज्यते।
निखिलान्तरशरीरसन्नियोजनेन कर्ष रे,
तुच्छतमप्राणरतिं परित्यज्य कर्ष च रे,
आलोके तमसि तथा त्वं परिकर्षन् व्रज रे,
ग्रामपदे नगरपदे वने तथा शैलपथे,
झञ्झनिति चक्रमदो विघूर्णते,
किं शृणोषि तद्ध्वनिमात्महृत्पथे ?
रक्ते तव न किमसवः स्पन्दरताः ?
मरणविजयि गानं वा नो गायति मनस्तथा ?
आकाङ्क्षा तव सलिलोच्छ्वासवेगसमाऽऽयते,
अभिद्रवति किं नहि वा रीधशून्यमनागते।

११९

'भजन पूजन साधन आराधना समस्त थाक् प'ड़े'

साधनाराधना भजनमपि पूजनं
सर्वमिदमस्तु तव दूरे;

संवृतद्वारसुरमन्दिराभ्यन्तरे
कथमिव श्रयसि वसतिं रे!

स्वात्मनान्तर्हितस्तिमिरे
कस्य रहोऽर्चनं चरसि रे?

उन्मील्य लोचनं पश्य विनिधाय त-
न्नास्ति किल दैवतमगारे।

तद् गतं यत्र भुवि मृत्तिकां चूर्णयन्
कर्षकः कृषिकृतौ लीनः,

भिन्नपाषाणको यत्र कुरुते सृतिं
श्राम्यति निरन्तरं दीनः।

आतपे वर्षणे तदिह सकलैः स्थितम्,
तत्करद्वयमिता धूलिः,

तदिव शुचिवस्त्रकं दूरतः परिहरन्
धूलिमयभुवि समायाहि रे।

मुक्तिरिति? मुक्तिमयि! कुत्र संलप्स्यसे!
कुत्र मुक्तिः स्थितैकान्ते?

स्वयमपि परेश्वरः सृष्टिबन्धनधरो
बन्धभाग् भवति सकलान्ते।

ध्यानमभिवर्ज्यतां कुसुमवल्लिरुज्झ्यताम
छिद्यतां वसनमधिकम्,

लगतु सिकतारजस्तेनैकताभृतः
कर्मयोगात् क्षरतु घर्मः ।

१२०

'सीमार माझे असीम तुमि बाजाओ आपन सुर'

सीमामध्ये सीमाशून्यस्त्वं भासयसि स्वरमात्मीयं,
तेन मदन्तस्त्वत्प्रतिभासनमास्ते परमाधुर्यमयम्।
बहुविधवर्णे बहुविधगन्धे,
गाने कियति च्छन्दोबन्धे,
अरूप हे ! तव रूपविलासैर्हृदयपुरं मम जागरितम्।
लोकातीतं तव सौन्दर्य्यं मयि परमेवं माधुर्य्यमितम्।
समागमे किलावयोः सर्वबन्धविमोचनम्,
तदा विश्वपयोनिधेस्तरङ्गितस्य नर्त्तनम्।
अधित्वदालोकमहो च्छाया नो विराजते,
सा हि ममान्तरे परं रूपमयी विभासते।
तदीयरूपमश्रुभिर्ममातिमात्रसुन्दरं,
त्वदीयरामणीयकं मयि किलैवमतिमधुरम्।

'ताइ तोमार आनन्द आमार पर तुमि ताइ एसेछ नीचे'

ततस्तरां मयि तव मोदमुग्धता,
अधस्ततस्त्वमुपगतोऽसि नाथ हे !
मया विना त्रिभुवननाथ ! निश्चितं,
वृथाऽजनिष्यत तव यत् प्रेम चितम् ।
प्रवर्त्तितोत्सवविपणिर्मया त्वया,
मदन्तरे वहति रसस्य खेलनम् ।
मदीयजीवने विचित्ररूपधृक्,
तरङ्गिता भवति तवाङ्ग ! वासना ।
त्वमाश्रितोऽप्यत इह राजराजतां,
मनोहरं बहुविधवेशमाश्रयन् ।
प्रभो ! भवे विहरसि मे हृदः कृते
निरन्तरं वससि तथा जागरितः ।
ततोऽवतीर्य्यात्र विभो ! समागतं,
भक्तहृदः प्रेमृणि तव प्रेम चितं,
युगलसम्मिलनेन ते रूपमहो,
तत्र पूर्णतया किल प्रकाशितम् ।

## १२२

'मानेर आसन आराम-शयन नय तो तोमार तरे'

सम्मानासनमथ सुखशयनं भवदर्थं नो नियतं,
सर्वं हित्वा प्रीतोऽद्य त्वं चल हे सरणौ त्वरितम् ।
सुहृदः सर्वे भवतोपगताः,
बहिरपि विन्दत सर्वे मिलिताः,
अद्य हि यात्रां प्रविधास्यामः
प्रति मानोज्झितजनोद्वसितम ।
निन्दां भूषणमिति धास्यामः
कण्ठहार इति कण्टकनिकरं,
ससमादरमपि निजनिजमूर्द्धसु
वक्ष्यामो ह्यपमानप्रकरम् ।
यत्र हि दुर्गतचरमागारं लुण्ठितशिरसस्तत्र स्याम,
त्यागमयं नः शून्यं पात्रं सुखरसपूर्णं रचयिष्यामः ।

'प्रभुगृह ह'ते आसिले येदिन वीरेर दल'

वीरगण ! त्वं हि यदा प्रभुनिलयादिहागमः,
कुत्र तदा लुप्त आस्त विपुलतमः पराक्रमः।
कुत्र वर्म कुत्र वास्त्रमदीपि ते,
क्षीणदीननिःसहाय एव तदा पर्य्यणमः।
अनर्गलाहृतीस्तदा दिग्बलयादुपागमः।
वीरगण ! त्वं हि यदा प्रभुनिलयादिहागमः।
वीरसङ्घ ! यदा पुनः प्रभुनिलये परावृतः,
कुत्र तदा लुप्तिमगात् पराक्रमः सुप्रचितः ?
धनुःशरासिप्रचयः कुत्र गतः प्रस्खलितः ?
शान्तिहास्यराशिरभूत्तदाननेषु स्फुरितः।
हित्वाखिलजीवनगतसकलफलं त्वं चलितः।
वीरसङ्घ ! यदा पुनः प्रभुनिलये परावृतः।

१२४

'भेबेछिनु मने या हवार तारि शेषे'

अभावयं हृदि ह्यहं यद् भवितव्वमास्त मे,
यात्रा मम संस्थगिताऽऽयातवतस्तदन्तिमे।
नास्ति शेषपथस्तथा नास्ति कृत्यमतः परं,
पाथेयं यन्ममास्त तच्छेषं न वा परम्।
गन्तव्यं समपसृत्य नीरवान्तरालपदम्,
सुजीर्णजीवनं मया छिन्नमलिनपरिच्छदम्?
किमद्य पश्यामि नवं लीलेयं का विपुला,
नवीनता केयमहो वहत्यन्तराप्तबला?
पुरातनी वाग् वदने यदा मृत्युपथे स्थिता,
नबीनगानतामिता वक्षसि सा निक्कणिता।
पुरातनी च पद्धतिर्यत्र समाप्तिमागता,
त्वया तत्र मे विहिता नूतनदेशबर्त्तिता।

१२५

'आमार ए गान छेड़ेछे तार सकल अलंकार'

अनया गीत्या मम सकलालंकृतिरस्याः परिमुक्ता,
स्वालङ्काराहंकृतिरनया भवतः सविधे त्यक्ता ।
भूषणमुभयोर्मध्ये पतितं,
मिलने कुरुते द्वयमन्तरितं,
प्रच्छादयति च भवतो वार्त्तां मुखरस्तज्झङ्कारः,
भवतः सविधे नह्य् चितो मे कविरिति गौरवकारः।
हे महाकवे ! तावके पदे
स्वप्रकाशनं कर्त्तुमिष्यते ।
जीवनविषयं यदि कृतयत्नं
विदधे सरलं वंशीरत्नम् ।
तदखिलरन्ध्रं पूरयितासे
स्वस्वरयुक्तया कृपया दासे ।

१२६

'निन्दा दुःखे अपमाने यत आघात खाइ'

निन्दनेन दुःखचयैस्तथापमानमालया,
लभेऽगणितसमाहतीस्तथापि मे भवति मतिः,
न किञ्चिदस्ति तत्र यद् विघटनमाप्तुमर्हति,
धूलितले निषेदुषो न भावनासनाप्तये,
दैन्ये सङ्कोचमृते तव प्रसादमर्थये।
प्रशंसन्ति यदा जना यदा सुखं वसाम्यहम्,
मनसि वेद्मि तत्र खलु प्रवञ्चनं बहु स्थितम्।
भ्रमामि मस्तके दधत् तदन्वहं प्रसाधयन्,
त्वां निकषोपसर्पितुं नावसरं व्रजाम्यहम्।

## १२७

'राजार मतो बेशे तुमि साजाओ ये शिशु रे'

राजोचितवेशैस्त्वं यं शिशुं विभूषयसे,
तथा विविधरत्नमयं हारं परिधापयसे।
क्रीडादिस्ततसुखविधिरखिल एव विप्लवते।
वसनभूषणं विभाति गुरुभारोऽस्य मानसे,
छिन्नं स्यात् समाहतं,
किं वा मृत्कलङ्कितं,
धियानया मनुजसमाजदूरतः,
स्वं समवस्थापयते चिरमपनीय सङ्गतः,
चलन्नसौ सम्भवतो विशति वितर्कस्य वशे,
राजोचितवेशैस्त्वं यं शिशुं विभूषयसे,
तथा विविधरत्नमयं हारं परिधापयसे।
कि मे भविता जननि ! तथाविध-नरपतियोग्याकल्पैः,
किं वा भविता कथय तथा मे मणिमयहारविकल्पैः,
त्वमपावृणुषे यदि हे द्वारं पथि धावनमनुवर्त्ते,
आतप-मारुत-कर्दम-धरणीधूलीपारे वर्त्ते।
यस्मिन् विश्वजनानां मेला,
सततं घटिता विविधा खेला,
अभितो रणिता विशालगाथा नानारागमुदारम्,
तत्र न विन्दति स ह्यधिकारम्,
नरपतिसमुचितवेशेन त्वं यं डिम्भं समलंकुरुषे,
नानाविधमणिमयमपि हारं ससमादरमामोचयसे।

१२८

'जड़िये गेछे सरु मोटा दुटो तारे'

स्थूला तन्त्री सूक्ष्मा तन्त्रीत्युभयं मिथ आश्लिष्टं,
जीवनवीणा नातः कुरुते रणितं सुषममभीष्टम्।
एतद्विषमस्वरजटिलत्वाद् हृन्मे व्यथया म्रियते,
सहसा गानं वारं वारं मम विश्रामं श्रयते।
जीवनवीणा सुषममभीष्टं रणितं न पुनः कुरुते।
पीडामेनां वोढुमहं नो शक्तः,
अपया दूये तव सदसः पथि युक्तः।
राजन्ते ये तव गुणवन्तः सजयाः,
नैव समासितुमलमासे तान् समया,
सर्वजनानां पश्चात्तावत्तिष्ठामि बहिर्द्वारे,
जीवनवीणा सुषमं रणितं न पुनः कुरुते हा रे।

## १२९

'गाबार मतो हय नि कोनो गान'

न प्रशस्तमजनि किमपि गानम्,
न प्रशस्तमजनि किमपि दानम्,
सर्वमेव समवशिष्टमिति करोमि हृदि मननम्।
दैवत हे! कदा भवेदिदं प्रपूर्य्य जीवनम्
अस्य जीवनस्य पुरः पूजनस्य समापनम्।
करोम्यन्यसकलानां सेवां किल यावतीम्,
प्राणपणं ददाम्यघसन्ततिम्।
दीनतया स्यां विदितश्चेति धिया प्रेरितः,
बहु ददामि सुसज्जितं सत्यमृषायोगतः।
त्वदन्तिके नास्ति किमपि रहस्यकं,
ततस्तवार्च्चने महत् साहसकम्।
यदस्ति मे तदुपनयामि ते पदे,
हृयनावृतं दरिद्रमेतदन्तरम्।

## १३०

'आमार माझे तोमार लीला हबे'

मयि तव तावल्लीला भविता,
तत एवागतिरिह मम जाता।
अत्र गृहे स्यान्मुक्तं निखिलं द्वारं,
सकलाहंकृतिरस्तं गन्ता वाढम्।
अत्र भवे तव सुखमय! नेष्टं,
वस्तु किमपि मे स्यादवशिष्टम्।
मरणाद् भविता शान्तिर्यावत्,
मयि तव लीला भविता तावत्।
निखिलः कामः स्यान्मे स्थगितः,
प्रेमण्येकस्मिंस्ते मिलतः।
जीवनके सुखदुःखविचित्रे,
त्वदृते नान्यत् किमपि स्थाता।

## १३१

'दुःस्वपन कोथा ह'ते ए'से जीवने बाधाय गण्डगोल'

दुःखप्नः कुतश्चनाभ्युपागतः,
संतनुते जीवनवृत्तविप्लवम् !
रुदन्नथो जागरितो विलोकया-
म्यस्ति मातुरङ्क एव, न त्वपरम् ।
व्यभावयं स्यादपरो हि कश्चन,
प्राणपर्णं ततो भयाद्रणं श्रितः ।
अथो हास्यमवेक्ष्य तेऽवधारये,
त्वमेव मे दोलनचालनं व्यधाः ।
भीतिदुःखसुखैस्तदीयसाधनै-
र्जीवनमेतज्जनयति विकम्पनम् ।
तानि विना न राजतीव किञ्चन,
तानि किला खिलानि वस्तूनि मम ।
नेत्रगतं तिमिरमिदं व्यपैष्यति,
निमेषमात्रेण विभातरोचिषा ।
पूर्णतम ! त्वदीयसम्मुखे विभो !
स्याद् विरता महोर्मिमालिकाखिला ।

## १३२

'गान दिये ये तोमाय खुँजि बाहिर मने'

त्वां विचिनोमि बहिर्मुख-मनसा
गीत्या सुचिरं जीवनवारे।
संगीतं किल समगमयन्मां
प्रत्युदवसितं द्वारे द्वारे।
गीतिकयास्मिन् हस्तामर्शं
विदधद् भ्रमामि भुवनागारे।
तत् समजनयद् बहुविधशिक्षां,
व्यदधाद्रहस्यबहुपथवीक्षाम्,
हृदयाकाशे बहुताराणां,
परिचयमतनोद् वारे वारे।
विविधसुखासुखविचित्रवेशे,
भ्रमयित्वा मामपूर्वदेशे,
अवसाने किल चित्राकारे,
सायं निदधे कुत्रागारे ?

१३३

'तोमाय खीँजा शेष हवे ना मोर'

यदा जीवनं मे समाप्त्युन्मुखं स्यात,
तदाप्यन्तमन्वेषणं ते न गन्ता ।
नवजीवनलोके प्रस्थास्ये,
भायान्नयने मम नवदृष्टिः,
तव नवमेलनपाशं धास्ये,
नूत्नालोकात् सन् नवसृष्टिः,
तव विचयान्तं न प्रतिपत्स्ये ।
नास्त्यन्तस्ते नास्त्यन्तो रे,
नवलीलास्माद् वारे वारे ।
किंवेशस्त्वं सरणौ तिष्ठन्,
पुनरपि नाथ ! स्मितमातन्वन्,
सविधमुपेतो हस्तमिमं मे,
धारयितासे नाहं जाने ।
नवभावावेशो हृदि भास्यति,
भवदन्वेषणमन्तं नाप्स्यति ।

१३४

'येन शेष गाने मोर सब रागिणी पुरे'

अन्तिमगाने प्रविलसतान्मे निखिलो गीतकरागः।
तत्स्वरसारे मम किल मिलतादखिलानन्दाभोगः।
येन प्रहसति मृन्मयदेहा धरणी,
द्रु-लता-शष्पेष्वस्थिरभावाश्रयिणी,
येनोन्मत्तद्वयवच्चरतो भुवने जीवन-मरणे।
सोऽयं परमानन्दो गम्यो भूयात्तत्स्वरशरणे।
वात्यावेशं समुपाश्रित्य प्रसरति यश्चानन्दः,
सुप्तं हृदयं खलु जागरयति धृतादृविहसितबन्धः।
य इहानन्दो लोचनसलिले,
दुःखामयमय-रक्तशतदले,
सञ्चितमखिलं धूलौ क्षिपतः स्फुरति न वाग् यद्वरणे।
सोऽयं परमानन्दः स्फुरितो भूयात्तत्स्वरशरणे।

१३५

'यखन आमाय बाँध आगे पिछे'

यावन्मां त्वं बध्नास्यग्रे पृष्ठे,
मन्ये न पुनर्लप्स्ये मुक्तिं परतः ।
यावदपि त्वं पातयसे मां निम्ने,
मन्ये न पुनः प्रोत्तिष्ठेयं पतितः ।
भूयोविगतं बन्धनमयि कुरुषे त्वम्,
आदत्से मां पुनरप्युत्थाप्य त्वम् ।
एवं तव भुजदोलान्दोलनविधितः,
जीवनकालं स्पन्दं तनुषेऽविरतः ।
भयमुपजनयन् कुरुषे तन्द्रालुप्तिं,
भीतिं द्रवयसि तावद् भिन्दन् सुप्तिम् ।
दृष्टो यासि विधाय मनस्याह्वानम्,
क्वापि ततस्त्वं नितरां भवसि विलुप्तः ।
मन्ये तावद् विघटितमिव नाथ ! त्वाम्,
कुतोऽपि पुनरथ वेदयसि स्वां सत्ताम् ।

'यत काल तुइ शिशुर मतो रइबि बलहीन'

स्थास्यसि यावद् बालकवत् त्वं बलहीनः,
तावच्चित्तान्तःपुरमधिवस संलीनः।
सभ्रमि निपतेः स्वल्पाघातात्,
दग्धोऽति भवेः स्वल्पकदाहात्,
देहः स्वल्पकधूलिस्पर्शात् स्यान्मलिनः,
तावच्चित्तान्तःपुरमधिवस संलीनः।
यावद् भविता नवबलवीर्यमुदीर्णं,
तावद् भविता तावकहृदयं पूर्णम्।
तदीयपावकपूरितममृतम्,
पास्यसि यावद् बहुधोपनतम्,
तावद् बहिरुद्गच्छ द्रुतमभिधावन्।
शुचिरेव त्वं तिष्ठेर्धूलावपि लुण्ठन्।
सर्वं बन्धं वपुषि वहन्नपि विहरेस्त्वं स्वाधीनः।
तावच्चित्तान्तःपुरमधिवस लीनः।

१३७

'आमार चित्त तोमाय नित्य हबे, सत्य हबे'

नित्यं स्यात् सत्यं स्यान्मम चित्तं त्वयीश हे !
सत्य ! ममेदृशं कदा शुभं दिनं घटेत हे !
सत्यमहर्निशं जपन् निखिलबुद्धिमिहार्पयन्,
निखिलभवे तरिष्यामि सीमाकृत-बन्धं हे !
कदा भवत्पूर्णरुचिं विलोकयेय सत्य हे !
त्वां द्रवयन्नसत्येन निजेन यामि दुर्गतिम् ।
भूततन्त्रतयाद्भुतं किं चरितं चरामि हे ।
अहन्ता समग्रतया,
भवेत्त्वयि प्राप्तलया,
सत्य ! त्वयि सत्यभावमयेय हे !
तदा समुज्जीवनमाश्रयेय हे !
त्वदन्तरे मम मरणं कदा मृतिं वृणीत हे ।

## १३८

'तोमाय आमार प्रभु क'रे राखि'

त्वां चिराय वासयानि मम प्रभोः पदे,
तावती मदहंकृतिस्तिष्ठतु सम्पदे ।
त्वामहं विलोकयेय सर्वदिगास्पदे,
निखिलसाधनेन त्वयि मिलितः स्यां मुदे ।
तव प्रेम्नि सहायतां दिवानिशं समाददे,
तावती हि ममैषणावशिष्यतां सुसम्पदे ।
त्वां चिराय वासयानि मम प्रभोः पदे।

त्वामहं हि नावृणुयां क्वापि नाथ ! पदे,
तावदेव हि केवलं ममावशिष्यतां मुदे ।
इदम्मनःपूरं किल तव लीला भविष्यति,
विधृत्य संसारमिमं ततो भवानवस्थितः,
भवद्बाहुबन्धनेन तिष्ठेयं शृङ्खलितः ।
तन्मात्रं बन्धनकं ममावशिष्यतां मुदे,
त्वां चिराय वासयानि नाथ ! मम प्रभोः पदे ।

१३९

'या दियेछ आमार ए प्राण भरि'

यदर्पयामास भवानिदं मनः प्रपूर्य्य मे,
तेन न खेदमाप्नुयामद्य मृत्युसमागमे।
दिवानिशं ह्यमितदुःखसुखागमात्,
अस्मिन् हृदि बहुरणनं समुद्गतम्।
अनेकवेशमाश्रितः प्रविश्य मे गृहान्तरे,
विचित्ररूपसम्पदा जहार मे मनो भवान्।
न खेदमाप्नुयामहं ह्यद्य मृत्युसमागमे।

अहं वेद्मि हृदा नहि त्वां वृतवान्,
निःशेषं न मे प्राप्यमुपेयिवान्।
यदाप्नवं तदेव वेद्मि भाग्यजं,
तव स्पर्शधनन्तु मे वितीर्णवान्,
असि त्वमित्येव मति वृणोम्यहम्।
गमिष्यामि तां मतिमाश्रितस्तरीम्,
खेदः स्यान्नाद्य मृत्युसमागमे।

१४०

'ओरे माझि, ओरे आमार मानवजन्म तरीर माझि

कर्णधार ! मम नरजनितरणि-कर्णधार हे !
अपि शृणोषि दूरागतपारवेणुरवं हे !
तरणिस्तव कर्णधार ! किमु दिनावसाने,
वारेऽस्मिन् समुपसृत्य लगिता नौस्थाने ।
तत्र किन्तु सान्ध्यतमसि दीपा दृशि भान्ति हे !
चेतसि मम विभातीव मन्दमधुर-वायुना,
परजलनिधिपारादिह निविड़तिमिरवर्त्मना,
हास्यमद्य कस्यचनायाति ललितसंक्रमम् ।
आगमनस्यावसरे कतिचिदत्र पुष्पचयान्,
समाहृत्य समानयं तत्र ये ह्यधुना नवाः,
तरधनैव सज्जितं करण्डकं कुरुष्व हे !

१४१

'मनके आमार कायाके'

मानसमपि मे कायम्,
इच्छाम्यहमतिविलयं नेतुं सुतरां कृष्णच्छायम्।
अमुना किल हविर्भुजा ज्वालयितुम्,
अमुत्र सागरे भृशं मज्जयितुम्,
अमुत्र तत्पदे द्रवं लम्भयितुम्,
दलितुं मायां बन्धानायम्
मानसमपि मे कायम्।
यत्र यामि तत्र हि तां विलोक्य सुस्थिरासनाम्।
म्रिये त्रपाभरैरहं छायां हर तां गहनाम्।
मानसमपि मे कायम्।
ममानुभावतः क्वचित् त्वं न विघ्नमवाप्स्यसि,
एकः सम्पूर्णतया दर्शनं वितरिष्यसि,
भृशमपसार्य हि मायाम्
मानसमपि मे कायम्।

'याबार दिने एइ कथाटि ब'ले येन याइ'

गमनदिने वचनमिदं समभिधाय भवतु गतिः,
यदीक्षितं यदुपगतं नास्ति तस्य तुलनमिति ।
इह ज्योतिरम्बुनिधौ शतदलपद्ममस्ति यत्,
मधु तस्यैवापीतं जातोऽहं तेन कृती ।
गमनदिने वचनमिदं निवेद्य मे भवतु गतिः ।
विश्वरूपरङ्गगृहे विधाय भूरि खेलनम्,
यामि विवृतनयनाभ्यां कृतापरूपदर्शनम् ।
स्प्रष्टुं यो न शक्यते, समग्रविग्रहैरसौ,
स्वधारणामधारयद्, यदीह काम्या विरतिः,
तदानुकम्पयैहैव समापयत्वसौ कृतीः ।
गमनदिने वचनमिदं सन्निवेद्य मेऽस्तु गतिः ।

## १४३

'आमार नामटा दिये दे'के राखि यारे'

निरन्तरं करोमि यं मदीयनामसंवृतम्,
प्रपच्यते सुदुर्गतः स नामबन्धनालये।
सुविस्मृत्य निखिलवस्तु यत्परिमाणतोऽनिशम्,
शून्यपथे नामपदं करोमि हन्त गुम्फितम्,
तावदेव मदीयनामान्धकारभरे,
विघटयामि सत्यभूतमात्मरूपमरे।
धूलिचयस्योपरि संयोज्य परं धूलिचयम्,
मदीयकं नामपदं प्रापये समभ्युदयम्।
स्यादथ कुत्रचित् पुनश्छिद्रलवः प्रमादतः,
इत्यभिशङ्कया मनो नो विरतिं मे सहते।
यावदेव समादरं तत्र दधाम्यसत्यके,
आत्मानं विघटयामि तावदेव तावद्दतम्।

१४४

'नामटा येदिन घुचावे नाथ

यदा नाथ ! नाम्नो विलीपं विदध्याः,
विमुक्तस्तदा स्यां गतः शान्तिमङ्का।
कृतादात्मना स्वप्नयोगाद् दुरापे,
समासाद्य जन्म त्वयि क्षेमरूपे,

समाच्छाद्य तावद् भवद्हस्तलेखां,
सदैवाङ्कयामि स्वनाम्नो हि रेखाम्।
व्यतीयाद् दिनं मे कियज्जीवनस्य,
तथा भीषणव्यापदास्कन्दितस्य ?
हृत्वान्येषां भूषणभारम्,
वाञ्छति भूषयितुं स्वाकारम्,
प्रच्छाद्यापरकीर्त्तिं स्वीयां
कीर्त्तिं प्रथयितुमिच्छति तदिदम्।

नाम ममेदं यातु विलायं, नाम तवैव मुखेन वदेयम्।
हित्वा नाम्ना परिचयमखिलैरेकीभावं किल गच्छेयम।

जड़ा'ये आछे बाधा छाड़ा'ये ये'ते चाइ'

बाधाभिरहं सुतरां श्लिष्टः परिहर्तुं ता ईहे,
ताः पुनरेताः परिहरतो मे पीड़ाश्चति हृद्गेहे।
मुक्तिं भिक्षितुमभियामि त्वां लज्जे पुनरर्थनसन्नाहे।
जाने नाथ ! त्वं मम जीवनराज्ये वस्तु श्रेष्ठं,
एवं द्रविणं न भवत्यपरं यत् स्यात् त्वमिव गरिष्ठम्।
तथापि यद् यद् भग्नं चूर्णं गेहे लसति निविष्टं,
शक्तिं तत्तत् परिवर्जयितुं विन्दे नैव निकृष्टम्।
आच्छाद्य त्वां रजसा हृदयं यानि समावृण्वन्ति,
नानाजन्मसु वहुमरणानां प्रचयं संघटयन्ति।
करोमि सुदृढ़ं सर्वहृदाहं तेषां नियतमवज्ञां,
तथापि तेषु प्रचिता प्रीतिर्मुश्चति नहि मे प्रज्ञाम्।
इयदवशिष्टं समूढ़मियदपि वश्चनमपि विफलत्वं,
कियती वस्तुनिगूहनचेष्टा तत्सम्बलनात् सत्यं,
स्वहितं यावद् घटयितुमीहे भयमाश्रयते चित्तम्।

## १४६

'तोमार दया यदि चाहिते नाओ जानि'

तव करुणाया याचनरीतिं यद्यपि नाहं जाने,
तथापि करुणावरणं कृत्वा कृष्ट्वा वर्त्तय चरणे।
यद् घटयित्वा सुखसम्मुग्धः पूर्णं सौख्यमुपासे,
घृणया तस्मिन् मा मां स्थापय धूलिक्रीड़ावासे।
पावकशल्यं क्षिप्त्वा कृपया हेतुः स्या जागरणे,
कोटिद्वयमृत्संशयमध्ये मुद्रितमास्ते सत्यम्,
त्वद्दत्ते को वा वेत्ति नयं वद तस्य स्फुटताधाने।
मृत्युं भित्त्वा क्षरति ह्यमृतम्,
दन्यमयं खं क्रमशः पूर्त्ति लभते तेनोपहितम्।
पतनव्यथिते स्फुरति च संवित,
तव सुगभीरा प्रबोधवाणी विरोधकोलाहलसन्धाने।

१४७

'जीवने यत पूजा हल ना सारा'

जीवनकाले यावत्पूजा नावसिताः,
जाने जाने तत्स्मृतिरिह मे नापगता।
अविकाशदशं यत् कुसुमं धरणौ पतितम्,
मरुसरणौ या तटिनी विघटितधारा,
जाने जाने तत् स्मृतिरपि मे नापसृता।
जीवनकालेऽद्यापि यदास्ते पश्चात्,
जाने जाने तदपि न मृषात्वमागात्।
यदनागतमिह यदनाहतमिह मम हे,
तत्तद् वीणातन्त्र्यां ध्वनितं तव हे,
जाने जाने तन्मतिरपि मे नापचिता,

## १४८

'एकटि नमस्कारे प्रभु । एकटि नमस्कारे'

नमस्ययैकया प्रभो ! नमस्ययैकया,
भवेऽत्र ते लुण्ठतु मे वपुरखिलं त्वया।
घनश्रावणमेघवद्रसभरनम्रया,
नमस्ययैकया प्रभो ! नमस्ययैकया,
त्वदीयमन्दिरद्वारि मया साधितया,
पतितमस्तु मनो ममानन्यगामितया ।
अनेकभावसञ्चयाकुलप्रवाहमालिकाम्,
अभिन्नतां समानीय विस्मृतात्मतया,
नमस्ययैकया प्रभो ! नमस्ययैकया,
उदारनीरवाम्बुधौ किल प्रविष्टया,
ममावसानमाप्यतां समग्रगीतधारया ।
मानसयात्रिणो यथा हंसचयाः,
दिनं रात्रिमपि व्याप्य यत्नमयाः,
नमस्ययैकया प्रभो ! तथा नमस्ययैकया
अशेषचित् समुत्पततु महामरणपारधिया।

१४९

'जीवने या चिरदिन र'ये गेछे आभासे'

यद्वस्त्वखिले जीवनकाले संस्थितमविशदभासं,
यन्न विभातालोकेऽप्यदधादात्मगतं प्रतिकाशम्,
चरमे जीवनकालिकदाने,
चरमे जीवनकालिकगाने,
तत् सम्प्रति हे दैवत ! भवतः प्रापयितास्मि सकाशं,
यन्न विभातालोकेऽप्यदधादात्मगतं प्रतिकाशम्।
न कथा शक्ता तन्निःशेषं स्वानुस्यूतं कर्त्तुं,
स्वरसङ्गमनाद् गानं नालं त वा प्रतिपादयितुम्,
कस्मिन् निभृतेऽतीव रहस्यं मोहननूतनरूपः,
स सखाऽवास्थित निखिलनयनतो बहिरावृतनिजरूपः,
यो न विभातालोकेऽप्यदधादात्मगतं प्रतिकाशम्।
देशे देशे तमुपादाय भ्रमणं बहुधा विहितम्,
जीवनकालिकभञ्जनघटनं निखिलं तत्सम्बलितम्।
निखिले भावे निखिले कृत्ये निखिले मत्सम्बद्धे,
शयने स्वपने स्थितिमानपि स ह्येकोऽवर्त्तत सिद्धे।
नैव विभातालोकेऽप्यदधादात्मगतं स विकाशम्।
कियत्सु कालेषु स वै, जनैः कियद्भिरीप्सितः,
पराङ्मुखो बहिर्द्वारि तत्प्रचयो मृषा गतः।
भवता सार्द्धं भविता परिचिति-
रपरः कोऽपि च न हि तज्ज्ञास्यति,
तामाशां ते संश्रितवन्तो ह्यासन् स्वहृदाकाशे,
न तु स विभातालोकेऽप्यददादात्मानं स्फुटभासे।

१५०

'तोमार साथे नित्य बिरोध आर सहे ना'

त्वया चिरं विरोधितामतः परं नैव सहे,
दिने दिने देयमृणं कियद्वृद्धिमुपैति हे।
सभ्यवेशसुसज्जिताः,
सर्व एव समागताः,
यथाकाममीश्वर हे! त्वां प्रणम्य दिशो गताः।
मलीमसाम्बरो ह्यहं भ्रमामि खल्वन्तरितः,
मानो मे न भवति नाथ! संस्थितः।
किं ननु वेदयिष्यामि मदीयचित्तवेदनं,
मूकभावमुपागतं मदीयमन्तःकरणम्।
तत्र पुनस्तवान्तिके वक्ति किमपि हा वचनम्,
वारेऽस्मिन् नाथ! न तत् पराङ्मुखं विधेहि हे!
असम्मानपारं मां लम्भय हे!
चिरक्रीततमिमं जनं चरणतले साधय हे!

## १५१

'प्रेमेर हाते धरा देब ताइ र'येछि ब'से'

अहं प्रेमवश्यभूयमयितुमितः प्रतीक्षणम्,
विलम्बनं बहुलमभूद् गतोऽस्मि भूरि दूषणम् ।
विधिविधानबन्धनेन बन्धुमिते समुद्यमम्,
तत्परिहारकाम्यया करोमि दूरतः क्रमम् ।
तेन यद्धि दण्डफलं भोक्तव्यं मे नियतम्,
तुष्टहृदा करिष्यामि तस्य भोगमस्खलनं,
अहं प्रेमवश्यभूयमयितुमितः प्रतीक्षणम् ।
विदधति लोका मम बहुनिन्दां सा नहि मिथ्याभूता,
शिरसि दधानः सकलां निन्दां सर्वाधः स्यां स्थाता ।
प्रायोऽवसिता वासरवेला,
भग्नेव क्रयविक्रयमेला,
आमन्त्रयितुं ये सम्मिलिता रोषात्ते प्रतियाताः,
प्रेमाधीनो भवितुमहं किल सापेक्षोऽस्मि स्थाता ॥

१५२

'संसारेते आर याहारा आमाय भालोबासे'

संसारे ये हि परे प्रीतिं मयि सन्दधते,
कठिनबन्धनेन हि ते बद्ध्वा मां निरुन्धते।
त्वत्प्रणयः सर्वजयी तत्त्वैव नयो नवः,
न बध्नासि रहश्चरसि सहसे मां बन्धमृते।
मदीयविस्मृतिक्रियाविशङ्कया परेऽखिलाः,
मृषन्ति नेककं हि मां दिनात् परं याति दिनम्,
तवैव नैव सङ्गतिः शुभावहा प्रजायते।
समाह्वयामि वा न वा भवन्तमीशमेषकः।
यथेच्छमाचरन् विधिं भवामि वा सदोषकः,
रुचिस्तु ते प्रतीक्षते मदीयसन्तुष्टिकृते॥

१५३

'प्रेमेर दूतके पाठावे नाथ ! कबे'

प्रभो ! प्रेषयेथाः कदा प्रेमदूतं,
मम द्वन्द्वजातं तदा स्याद् विधूतम् ।
समायान्ति येऽन्ये मदीये निकेते,
भयं लम्भयित्वा प्रशासत्यहो ते ।
मनो द्वारमावृत्य तिष्ठत्यशान्तं,
नतिं नैति सर्वान् निवृत्तान् विधत्ते ।
निरस्तं समस्तं भवेदर्गलं वै,
तदीयागमात् सर्वबन्धो व्यपेयात् ।
तदा को नु रक्षेद् गृहे सन्निरुन्धन्,
उपेक्षा न शक्या तदाह्वानकृत्ये ॥
यदायाति सोऽसौ तदा निःसहायो,
गले लम्बमानां दधत् पुष्पमालाम् ।
तया तेन कृष्ट्वा हि बद्धो यदा स्यां,
मनो मे तदा नीरवं संस्थितं स्यात् ।

१५४

'गान गाओयाले आमाय तुमि कतइ छले ये'

गानमगापयस्त्वं हि माममितच्छलेन हे!
अमितसुखक्रीडनयामितलोचनजलेन हे!
प्रकाशयन्नपि स्वकं न सम्प्रकाशयस्यहो,
समीपतः समायासि पुनर्द्रुतं पलायसे,
पले पले व्यथाकुलर्मानसमपि पूरयसे॥
गानमगापयस्त्वं हि कियतैवं च्छलेन हे,
कियत्तीव्रतन्त्रीभिस्तव वीणां सज्जयसे,
जीवनं शतरन्घ्रयन् वंशीमपि वादयसे।
तव स्वरस्य लीलया जन्म गतप्रायं यदि,
नीत्वा विश्राममथो चरणतले स्थापय हे,
चिरजीवनमगापयो गानममितमिषेण हे!

१५५

'मने करि एइखाने शेष कोथा वा हय शेष'

मन्यतेऽत्र समापनं किन्तु कुतः समापनम् ?
पुनस्तदीयसंसदस्तवादेशसङ्गमनम् ।
नवीनगीतिकोदयान्नवीनरागसञ्चयात्,
नवीनभावसङ्गतं प्रबुध्यतेऽन्तःकरणम् ।
स्वराध्वना क्व गच्छामि नास्ति तस्य निश्चयनम् ।
प्रदोषकृतकनकरुचा विधाय तानमेलनम्,
पूरवीस्वरेण यदा कृतं गीतसमापनम् ।
निशीथकालिकैस्ततः सुगम्भीरतरस्वरैः,
पुनर्मदीयजीवनं दधाति चारु पूरणम्,
तदा न मे नयनयुगे सुप्तिलवस्याप्ययनम् ॥

## १५६

'शेषेर मध्ये अशेष आछे'

अन्तस्यान्तर्नूनमनन्तो विलसति वागियमन्तः,
प्रतिपलमद्य प्रचरति यावन्मम खलु गानस्यान्तः।
स्वर उपयातो विरतिं तदपि स नेच्छतीव विरन्तुम्,
नीरवतायां रणति हि वीणा फलयोगस्तु न कान्तः।
तन्त्री यावत्ताडनमयते स्वरयोगेन च रणिता।
गीतिर्या किल निखिलवरिष्ठा भवति सुदूरे वितता।
निखिले रागे विरतिं याते शान्तविपञ्ची श्रयते,
सन्ध्या यद्वद् गभीररणितेनान्तं दिनस्य भजते॥

१५७

'दिवस यदि साङ्ग हो'लो ना यदि गाहे पाखी'

यदि दिनमन्तं यातं विहगो यदि नहि गायति गानम्,
क्लान्तो न पुनर्यदि च समीरः कुरुते परितो यानम्,
सुनिविडतिमिरतले तदिदानीं,
कुरु मे सुभृशावरणम्,
स्वप्नेन यथाऽविदितं शनकै—
र्व्यदधा वसुधावरणम्,
अक्लथा हि यथा जातावरणं तन्द्रामुद्रितनयनम्,
रजनीकालिक—शतदलकमलश्चापि यथा सावरणम्।
पाथेयं यस्य यती मध्यपथे,
निःशेषं क्षयमयितुं प्रक्रमते,
क्षतिलक्षणमर्जनि यस्य लक्ष्यमेव विलक्षणम्,
वसनभूषणे मलिने धूलिभिरपमानैरथ,
जिहासतीव यं बलं भाति तथा लक्षणतः
लुम्पतु तस्य क्षतजं कष्टं
करुणाघन—भृश—रहस्यता ते
छित्त्वा लज्जां तमिमं जीवय नवभूतोषःपानात्,
सन्तर्प्य च तं तिमिरभरामृत—
रससन्ततिसन्दानात्॥

॥ इति ॥

गीताञ्जलेरनुवादः समाप्तः